भावं न कुरुते यस्तु सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा स च वैवस्वतो नरः ॥३७॥
बाह्यार्थनिरपेक्षो यः क्रियां भक्त्या विवस्वतः ।
भावेन निष्पादयति ज्ञेयो वैवस्वतो हि सः ॥३८॥
नारयो यस्य न स्निग्धा न भेदाधीनवृत्तयः ।
वीक्षते सर्वमेवेदं भानुं वैवस्वतो हि सः ॥३९॥
सुतप्तेनेह तपसा यज्ञैर्वा बहुदक्षिणैः ।
तां गतिं न नरा यांति यां तु वैवस्वतो गतः ॥४०॥
येन सर्वात्मना भानौ भक्त्या भावो निवेशितः ।
देवश्रेष्ठ कृतार्थत्वाच्छ्लाघ्यो वैवस्वतो हि सः ॥४१॥
अपि नः स कुले धन्यो जायेत कुलपावनः ।
भास्करं भक्तिभावेन यस्तु वै पूजयिष्यति ॥४२॥
यः कारयति देवार्चां हृदयालंबिनीं रवेः ।
स नरोऽर्कमवाप्नोति धर्मध्वजमनौपमम् ॥४३॥
यश्च देवालयं भक्त्या भानोः कारयते स्थिरम् ।
स सप्त पुरुषाँल्लोकान्भानोर्नयति मानवः ॥४४॥
यावन्तोब्दान्हि देवार्चा रवेस्तिष्ठति मंदिरे ।
तावद्वर्षसहस्राणि पुष्पोत्तरगृहे वसेत् ॥४५॥
देवार्चालक्षणोपेतो यद्गृहे संततो विधिः ।
निष्कामं च मनो यस्य स यात्यक्षरसाम्यताम् ॥४६॥
पुष्पाण्यतिसुगंधीनि मनोज्ञानि च यः पुमान् ।
प्रयच्छति जगन्नाथे सप्ताश्वे ज्योतिषां पतौ ।
स याति परमं स्थानं यत्र ज्योतिः सनातनम् ॥४७॥
यस्ययस्य विहीनो यो देशो यद्वर्जितं च यत् ।
धूपांश्च विविधांस्तांस्तान्गंधाढ्यं सुविलेपनम् ॥४८॥
दीपवर्त्युपहारांश्च यच्चाभीष्टमथात्मनः ।
नरः सोनुदिनं यज्ञान्करोत्याराधनाद्रवेः ॥४९॥
यज्ञेशो भगवान्भानुर्मखैरपि स तोष्यते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ।
संप्राप्यंते धनयुतैर्मनुष्यैर्नाल्पसंचयैः ॥५०॥
भक्त्या तु पुरुषैः पूजा कृता दूर्वांकुरैरपि ।
रवेर्ददाति हि फलं सर्वयज्ञैः सुदुर्लभम् ॥५१॥
यानि पुष्पाणि हृद्यानि धूपगंधानुलेपनम् ।
दयितं भूषणं यच्च तथा रक्ते च वाससी ॥५२॥
यानि चाभ्यवहार्याणि भक्ष्याणि च फलानि च ।
प्रयच्छतानि मार्तंडे भवेथाश्चैव तन्मनाः ॥५३॥
आद्यं तं यज्ञपुरुषं यथा भक्त्या प्रसादय ।
आराध्य याति तं देवं यत्तद्ब्रह्म परं स्मृतम् ॥५४॥
पुण्यैः स्तीर्थोदकैः पुष्पैर्मधुना सर्पिषा तथा ।
क्षीरेण स्नापयन्देवमच्युतं जगतां पतिम् ॥५५॥
दधिक्षीरह्रदान्पुण्यांस्ततो लोकान्मधुच्युतः ।
प्रयास्यसि यदुश्रेष्ठ निर्वृतिं चापि ऐश्वरीम् ॥५६॥
स्तोत्रैर्हैद्यैर्यथा वाद्यैर्ब्राह्मणानां च तर्पणैः ।
मनसश्चैकतायोगादाराधय दिवाकरम् ॥५७॥
आराध्य तं महादेवो महच्छब्दमवाप्तवान् ॥५८॥
अहं चापि समस्तानां लोकानां सृष्टिकारकः ।
तमाराध्य विवस्वंतं तत्प्रसादाज्जनार्दन ॥५९॥
त्वमप्येतं हृषीकेश तत्प्रसादान्न संशयः ।
समर्थो देवशत्रूणां दैत्यानां नाशने सदा ॥६०॥
दक्षिणः किरणस्तस्य यो देवस्य विवस्वतः ।
अहं तस्मात्समुत्पन्नो वेदवेदांगसम्मितः ॥६१॥
वामो यः किरणः कृष्ण रश्मिमालाकुलः सदा ।
तस्मादीशः समुत्पन्नः पार्वतीदयितोऽच्युत ॥६२॥
वक्षसस्त्वं समुत्पन्नः शंखचक्रगदाधरः ।
तथांबुजकरा देवी अंबुजाननवल्लभा ॥६३॥
तमाराध्य बलं कीर्तिं श्रियं चावाप्तवानहम् ।
तथा त्वमपि राजेंद्र तमाराध्य दिवाकरम् ।
यान्यानिच्छसि कामांस्त्वं तांस्तान्सर्वानवाप्स्यसि ॥६४॥
य इदं शृणुयान्नित्यं संवादं विधिकृष्णयोः ।
सोऽपि कामानवाप्याग्र्यांस्ततो लोकमवाप्नुयात् ॥६५॥
गैरिकं यानमारूढो युक्तं कुञ्जरवाजिभिः ।
तेजसांबुजसंकाशः प्रभयांडजसन्निभः ॥६६॥
कांत्या चंद्रसमो राजन्वृन्दारकगणैर्वृतः ।
गंधर्वैर्गीयमानस्तु तथा चाप्सरसां गणैः ॥६७॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यपूजावर्णनं नाम विंशोत्तरशततमोऽध्यायः ॥१२०॥

# एकविंशोत्तरशततमोऽध्यायः
## विश्वकर्मकृतसूर्यशरीरतेजःशातनवृत्तान्तवर्णनम्

शतानीक उवाच ।

शरीरलेखनं भानो रुक्तं संक्षेपतस्त्वया ।
विस्तराच्छ्रोतुमिच्छामि तन्ममाचक्ष्व सुव्रत ॥ १ ॥

सुमंतुरुवाच

पितुर्गृहं तु यातायां संज्ञायां कुरुनंदन ।
भास्करश्चिंतयामास संज्ञा मद्रूपकारिणी ॥ २ ॥
एतस्मिन्नंतरे ब्रह्मा तत्रागत्य दिवाकरम् ।
अब्रवीन्मधुरां वाचं रवेः प्रीतिकरां शुभाम् ॥ ३ ॥
आदिदेवोसि देवानां व्याप्तमेतत्त्वया जगत् ।
श्वशुरो विश्वकर्मा ते रूपं निर्वर्तयिष्यति ॥ ४ ॥
एवमुक्त्वा रविं ब्रह्मा विश्वकर्माणमब्रवीत् ।
निवर्तस्व मार्तण्डं स्वरूपं तत्सुशोभनम् ॥ ५ ॥
ततो ब्रह्मसमादेशाद्भूमिमारोप्य भास्करम् ।
रूपं निर्वर्तयामास विश्वकर्मा शनैः शनैः ॥ ६ ॥
ततस्तुष्टाव तं ब्रह्मा सर्वदेवगणैः सह ।
गुह्यैर्नानाविधैः स्तोत्रैर्वेदवेदांगपारगैः ॥ ७ ॥
स्वस्ति तेऽस्तु जगन्नाथ धर्मवर्षहिमाकर ।
शांतिस्ते सर्वलोकानां देवदेव दिवाकर ॥ ८ ॥
ततो रुद्रश्च विष्ण्वाद्याः स्तुवंतस्तं दिवाकरम् ।
तेजस्ते वर्धतां देव लिख्यतेऽपि दिवस्पते ॥ ९ ॥
इन्द्रश्चागत्य तं देवं लिख्यमानमथास्तुवत् ।
जय देव जयस्वेति तत्त्वदोऽसि जगत्पते ॥१०॥
ऋषयस्तु ततः सप्त विश्वामित्रपुरोगमाः ।
तुष्टुवुर्विविधैः स्तोत्रैःस्वस्तिस्वस्तीतिवादिनः ॥११॥
वेदोक्ताभिरथाशीर्भिर्वालखिल्याश्च तुष्टुवुः ।
त्वं नाथ मोक्षिणां मोक्षो ध्येयस्त्वं ध्यानिनामपि॥१२॥
त्वं गतिः सर्वभूतानां त्वयि सर्वं प्रतिष्ठितम् ।
प्रजाभ्यश्चैव देवेश शं नोऽस्तु जगतः पते ॥१३॥
त्वत्तो भवति वै नित्यं जगत्संलीयते त्वयि ।
त्वमेकस्त्वं द्विधा चैव त्रिधा च त्वं न संशयः ॥१४॥
त्वयैकेन जगत्सृष्टं त्वयैकेन प्रबोधितम् ।
ततो विद्याधरगणा यक्षराक्षसपन्नगाः ॥१५॥
कृतांजलिपुटाः सर्वे शिरोभिः प्रणता रविम् ।
ऊचुरेवंविधा वाचो मनः श्रोत्रसुखप्रदाः ॥१६॥
सह्यं भवतु ते तेजो भूतानां भूतभावन ।
हाहा हूहूस्ततश्चैव तुंबुरुर्नारदस्तथा ॥१७॥
उपगातुं समारब्धा गायुच्चैः कुशला रविम् ।
षड्जमध्यमगांधारग्रामत्रयविशारदाः ॥१८॥
मूर्च्छनाभिस्ततश्चैव तथा धैवतपंचमैः ।
नानानुभावमंद्रैश्च अर्धमंद्रैस्तथैव च ॥१९॥
त्रिसाधनैः प्रकारैस्तु वाद्यतालसमन्वितैः ।
विश्वाची च घृताची च उर्वशी च तिलोत्तमा ॥२०॥
मेनका सहजन्या च रंभा चाप्सरसां वरा ।
हावभावविलासैश्च कुर्वत्योऽभिनयान्बहून् ॥२१॥
ततोऽतीव कलं गेयं मधुरं च प्रवर्तते ।
सर्वेषां देवसंघानां मनः श्रोत्रसुखप्रदम् ॥२२॥
प्रवाद्यं तु ततस्तत्र वीणावंशादि सुव्रत ।
पणवाः पुष्कराश्चैव मृदंगाः पटहास्तथा ॥२३॥
देवदुंदुभयः शंखाः शतशोऽथ सहस्रशः ।
गायद्भिश्चैव गंधर्वैर्नृत्यद्भिश्चाप्सरोगणैः ॥२४॥
तूर्यवादित्रघोषैश्च सर्वं कोलाहलीकृतम् ।
ततः कृतैः करपुटैः पद्मकुड्मलसन्निभैः ॥२५॥
ललाटोपरि विन्यस्तैः प्रणेमुः सर्वदेवताः ।
ततः कोलाहले तस्मिन्त्सर्वदेवसमागमे ॥२६॥
तेजसः शातनं चक्रे विश्वकर्मा शनैः शनैः ॥२७॥

इति हिमजलघर्मकालहेतो
ईरकमलासनविष्णुसंस्तुतस्य ।
तदुपरि लिखनं निशम्य भानो
व्रजतिदिवाकर लोकमायुषोंते ॥२८॥

१ शरीरलेखनं सूर्ये कथं वै प्रतिपादितम् । दैवतैर्ऋषिभिर्वापि तन्ममाचक्ष्व सुव्रत–इ० पा० ।

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे विश्वकर्मकृतसूर्यतेजः शातनं नामैकविंशोत्तरशततमोऽध्यायः ॥ १२१ ॥

# द्वाविंशोत्तरशततमोऽध्यायः

## ब्रह्मादिदेवकृतसूर्यस्तुतिवर्णनम्

शतानीक उवाच

तस्मिन्काले समारूढो लिख्यमानो दिवस्पतिः ।
ब्रह्मादिभिः स्तुतो देवैर्यथा वै तद्वदस्व मे ॥ १ ॥

सुमंतुरुवाच

शृणुष्वैकमना राजन्यथा देवो दिवस्पतिः ।
ब्रह्मादिभिः स्तुतो देवैर्ऋषिभिश्च पुरानघ ॥ २ ॥
प्रयत्नतः प्रणतहितानुकंपिने
स्वरूपतो लोकविभाविने नमः ।
दिवस्पते कमलकुलावबोधिने
नमस्तमः पटलपटावपाटिने ॥ ३ ॥
पावनातिशयपुण्यकर्मणे नैककामविभवप्रदायिने ।
भासुरामलमयूखमालिने सर्वलोकहितकारिणे नमः॥४॥
अजाय लोकत्रयभावनाय
भूतात्मने गोपतये प्रियाय ।
नमो महाकारुणिकोत्तमाय
सूर्याय लोकत्रयभावनाय ॥ ५ ॥
विवस्वते ज्ञानकृतांतरात्मने
जगत्प्रतिष्ठाय जगद्धितैषिणे ।
स्वयंभुवे लोकसमस्तचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥ ६ ॥
निजोदयाय सुरगणमौलिमणे जगता
त्वं महितस्त्वमुरुमयूखसहस्रतपाः ।
जगति विभो वतमसतुद वनतिमिरासवपावन
मदाद्ववति विलोहितविग्रहता ।
तिमिरविनाशिनमुग्रं सुतरां त्रिभुवनभाप्रकरैः ॥ ७ ॥
रथमारुह्य समामयं भ्रमसि सदा जगतो हितदः ॥ ८ ॥
इत्येवं संस्तुतो देवो भास्करो वेधसापुरा ।
दैवतैश्च महाबाहो शिवविष्ण्वादिभिर्नृप ॥ ९ ॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे आदित्यस्तवो नाम द्वाविंशोत्तरशततमोऽध्यायः ॥ १२२ ॥

---

# त्रयोविंशत्युत्तरशततमोऽध्यायः

## सूर्यमाहात्म्यवर्णने सूर्यतेजःशातनावसरे ब्रह्मविष्ण्वीशकृतसूर्यस्तुतिवर्णनम्

शतानीक उवाच

भूयोऽपि कथयस्वेमां कथां सूर्यसमाश्रिताम् ।
न तृप्तिमधिगच्छामि शृण्वन्नेतां कथां मुने ॥ १ ॥

सुमंतुरुवाच

भास्करस्य कथां पुण्यां सर्वपापप्रणाशिनीम् ।
वक्ष्यामि कथितां पूर्वं ब्रह्मणा लोककर्तृणा ॥ २ ॥
ऋषयः परिपृच्छंति ब्रह्मलोके पितामहम् ।
तापिताः सूर्यकिरणैस्तेजसा संभ्रमोहिताः ॥ ३ ॥

ऋषय ऊचुः

कोऽयं दीप्तो महातेजा हवीराशिसमप्रभः ।
एतद्वेदितुमिच्छामः प्रभावोऽस्य कुतः प्रभो ॥ ४ ॥

ब्रह्मोवाच

तमोभूतेषु लोकेषु नष्टे स्थावरजंगमे ।
प्रवृत्ते गुणहेतुत्वे पूर्वं बुद्धिरजायत ॥ ५ ॥
अहंकारस्ततो जातो महाभूतप्रवर्तकः ।
वाय्वग्निरापः खं भूमिस्ततस्त्वंडमजायत ॥ ६ ॥
तस्मिन्नंडे इमे लोकाः सप्त वै संप्रतिष्ठिताः ।
पृथ्वी च सप्तभिर्द्वीपैः समुद्रैश्चापि सप्तभिः ॥ ७ ॥
तत्रैवावस्थितो ह्यासमहं विष्णुर्महेश्वरः ।
प्रमूढास्तमसा सर्वे प्रध्याता ईश्वरं परम् ॥ ८ ॥
ततो भिद्य महातेजः प्रादुर्भूतं तमोनुदम् ।
ध्यानयोगेन चास्माभिर्विज्ञातं सवितुस्तथा ॥ ९ ॥

१ आर्षो नामावः ।

१ अर्द्धमेवोपलभ्यते ।

ज्ञात्वा च परमात्मानं सर्व एव पृथक्पृथक् ।
दिव्याभिः स्तुतिभिर्देवं संस्तोतुमुपचक्रमुः ॥१०॥

आदिदेवोऽसि देवानामीश्वराणां त्वमीश्वरः ।
आदिकर्तासि भूतानां देवदेव सनातन ॥११॥

जीवनं सर्वसत्त्वानां देवगंधर्वरक्षसाम् ।
मुनिकिन्नरसिद्धानां तथैवोरगपक्षिणाम् ॥१२॥

त्वं ब्रह्मा त्वं महादेवस्त्वं विष्णुस्त्वं प्रजापतिः ।
वायुरिंद्रश्च सोमश्च विवस्वान्वरुणस्तथा ॥१३॥

त्वं कालः सृष्टिकर्ता च हर्ता त्राता प्रभुस्तथा ।
सरितः सागराः शैला विद्युदिंद्रधनूंषि च ।
प्रलयः प्रभवश्चैव व्यक्ताव्यक्तः सनातनः ॥१४॥

ईश्वरात्परतो विद्या विद्यायाः परतः शिवः ।
शिवात्परतरो देवस्त्वमेव परमेश्वर ॥१५॥

सर्वतः पाणिपादस्त्वं सर्वतोऽक्षिशिरोमुखः ।
सहस्रांशुस्त्वं तु देव सहस्रकिरणस्तथा ॥१६॥

भूरादिर्भूर्भुवःस्वश्च महर्जनस्तपस्तथा ।
प्रदीप्तं दीप्तिमन्नित्यं सर्वलोकप्रकाशकम् ।
दुर्निरीक्ष्यं सुरेंद्राणां यद्रूपं तस्य ते नमः ॥१७॥

सुरसिद्धगणैर्जुष्टं भृग्वत्रिपुलहादिभिः ।
शुभं परममव्यग्रं यद्रूपं तस्य ते नमः ॥१८॥

पंचातीतस्थितं तद्वै दशैकादश एव च ।
अर्धमासमतिक्रम्य स्थितं तत्सूर्यमंडले ।
तस्मै रूपाय ते देव प्रणताः सर्वदेवताः ॥१९॥

विश्वकृद्विश्वभूतं च विश्वानरसुरार्चितम् ।
विश्वस्थितमचिंत्यं च यद्रूपं तस्य ते नमः ॥२०॥

परं यज्ञात्परं देवात्परं लोकात्परं दिवः ।
दुरतिक्रमेति यः ख्यातस्तस्मादपि परं परात् ।
परमात्मेति विख्यातं यद्रूपं तस्य ते नमः ॥२१॥

अविज्ञेयमचिंत्यं च अध्यात्मगतमव्ययम् ।
अनादिनिधनं देवं यद्रूपं तस्य ते नमः ॥२२॥

नमोनमः कारणकारणाय
नमोनमः पापविनाशनाय ।
नमोनमो वंदितवंदनाय
नमो नमो रोगविनाशनाय ॥२३॥

नमोनमः सर्ववरप्रदाय
नमोनमः सर्व बलप्रदाय ।
नमोनमो ज्ञाननिधे सदैव
नमोनमः पंचदशात्मकाय ॥२४॥

स्तुतः स भगवानेवं तेजसां रूपमास्थितः ।
उवाच वाचं कल्याणीं को वरो वः प्रदीयताम्॥२५॥

तवातितेजसा रूपं न कश्चित्सहते विभो ।
सहनीयं भवत्वेतद्धिताय जगतः प्रभो ॥२६॥

एवमस्त्विति गामुक्त्वा भगवान्सर्वकृत्स्वयम् ।
लोकानां कार्यसिद्ध्यर्थं घर्मवर्षाहिमप्रदः ॥२७॥

अतः सांख्याश्च योगाश्च ये चान्ये मोक्षकांक्षिणः।
ध्यायन्ति ध्यानिनो नित्यं हृदयस्थं दिवाकरम् ॥२८॥

सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः ।
सर्वं तरति वै पापं दैवकर्मसमाश्रितः ॥२९॥

अग्निहोत्रं च वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
भानोर्भक्त्या नमस्कारकलां नार्हंति षोडशीम् ॥३०॥

तीर्थानां परमं तीर्थं मंगलानां च मंगलम् ।
पवित्रं च पवित्राणां तं प्रपद्ये दिवाकरम् ॥३१॥

ब्रह्माद्यैः संस्तुतं देवैर्ये प्रपद्यन्ति भास्करम् ।
निर्मुक्ताः किल्बिषैः सर्वैस्ते यान्ति रविमन्दिरम्॥३२॥

उपचर्यादिभिः साध्यो यथा वेदे दिवस्पतिः ।
लोकानामिह सर्वेषां तथा देवो दिवाकरः ॥३३॥

शतानीक उवाच

शरीरलेखनं सूर्ये कथं वै प्रतिपादितम् ।
देवैः सऋषिभिर्वापि तन्ममाचक्ष्व सुव्रत ॥३४॥

सुमन्तुरुवाच

ब्रह्मलोके सुखासीनं ब्राह्मणं ते सुरा सुराः ।
ऋषयः समुपागम्य इदमूचुः समाहिताः ॥३५॥

भगवन्देवतापुत्रो य एष दिवि राजते ।
तेनांधकारो निकृत्तः सोऽयं जाज्वलितीति हि॥३६॥

अस्य तेजोभिरखिलं जगत्स्थावरजंगमम् ।
नाशमायाति देवेश यथा क्लिष्टं नदीतटम् ॥३७॥

वयं च पीडिताः सर्वे तेजसा तस्य मोहिताः ।
पद्मश्चायं यथा म्लानो योयं योनिस्तव प्रभो ॥३८॥

१ नमस्यंति-इ० पा० । २ तम्-इ० पा० ।

दिवि भुव्यंतरिक्षे च शर्म नोपलभामहे ।
तथा कुरु सुरज्येष्ठ यथा तेजः प्रशाम्यति ॥३९॥

एवमुक्तः स भगवान्पद्मयोनिः प्रजापतिः ।
उवाच भगवान्ब्रह्मा देवान्विष्णुपुरोगमान् ॥४०॥

महादेवेन सहिता इन्द्रेण च महात्मना ।
तमेव शरणं देवं गच्छामः सहिता वयम् ॥४१॥

ततस्ते सहिताः सर्वे ब्रह्मविष्ण्वादयः सुराः ।
गत्वा ते शरणं सर्वे भास्करं लोकभास्करम् ॥४२॥

स्तोतुं प्रचक्रमुः सर्वे भक्तिनम्राः समंततः ।
केशादिदेवताः सर्वा भक्तिभावसमन्विताः ॥४३॥

ब्रह्मविष्ण्वीशा ऊचुः

नमोनमः सुरवर तिग्मतेजसे
नमोनमः सुरवर संस्तुताय वै ।
जडांधमूकान्बधिरान्सकुष्ठान्
सश्वित्रिणोऽथान्विधव्रणावृतान् ।
करोषि तानेव पुनर्नवान्सदा
अतो महाकारुणिकाय ते नमः॥४४॥

यदौदरं ज्योतिरतित्वरन्महद्य-
दल्पतेजो यदपीह चक्षुषाम् ।
यदत्र यज्ञेष्वपनीतमाहितं
तवैव तद्रूपमनेकतः स्थितम् ॥४५॥

सुरद्विषः सागरतोयवासिनः
प्रचण्डपाशासिपरश्वधायुधाः ।
समुच्छ्रितास्ते भुवि पापचेतसः
प्रयांति नाशं तव देव दर्शनात् ॥४६॥

यतो भवांस्तीर्थफलं समस्तं
यज्ञेषु नित्यं भगवानवस्थितः ।
नमो भवन्नत्र विचारणास्ति
सदा समः शांतिकरो नराणाम् ।
यच्चापि लोके तप उच्यते बुधै
स्तत्ते महातेज उशंति पण्डिताः॥४७॥

स्तुतः स भगवानेवं प्रजापतिमुखैः सुरैः ।
अवधानं ततश्चक्रे श्रवणाभ्यां महीपते ॥४८॥

स्तुवंति ते ततो भूयः शिवविष्णुपुरोगमाः ।
कृत्वा मां पुरतः सर्वे भक्तिनम्राः समन्ततः ॥४९॥

नमोनमस्त्रिभुवनभूतिदायिने[1]
क्रतुक्रियासत्फलसंप्रदायिने ।
नमोनमः प्रतिदिनकर्मसाक्षिणे
सहस्रसंदीधितये नमो नमः ॥५०॥

प्रसक्तसप्ताश्वयुजे क्षयाय
ध्रुवैकरश्मिग्रथिने नमोनमः ।
सवालखिल्याप्सरकिन्नरोरगैः
संसिद्धगन्धर्वपिशाचमानुषैः ।
सयक्षरक्षोगणगुह्यकोत्तमैः
स्तुतःसदा देव नमो नमस्ते ॥५१॥

यतो रसान्संक्षिपसे शरीरिणां
गभस्तिभिर्हिमजलघर्मनिस्रवैः ।
जगच्च संशोषयसे सदैव
अतोसिलोके जगतो विशोषणम्[2] ॥५२॥

ब्रह्मोवाच

ज्ञात्वा तेषामभिप्रायमुवाच भगवान्वचः ।
लब्ध्वानुज्ञां ततः सर्वे सुराः संहृष्टचेतसः ॥५३॥
त्वष्टारं पूजयामासुर्मनोवाक्कायकर्मभिः ।
विश्वकर्मा तवादेशात्करोतु तव सौम्यताम् ॥५४॥
ततस्तु तेजसो राशिं सर्व कर्म विधानवित् ।
भ्रमिमारोपयामास विश्वकर्मा विभावसुम् ॥५५॥
अमृतेनाभिषिक्तस्य तदा सूर्यस्य वै विभोः ।
तेजसः शातनं चक्रे विश्वकर्मा शनैःशनैः ॥५६॥
आजानुलिखितश्चासौ ससुरासुरपूजितः ।
नाभ्यनंदत्ततो देव उल्लेखनमतः परम् ॥५७॥
ततः प्रभृति देवस्य चरणौ नित्यसंवृतौ ।
तापयन्लापयंश्चैव युक्ततेजोऽभवत्तदा ॥५८॥
यच्चास्य शातितं तेजस्तेन चक्रं विनिर्मितम् ।
येन विष्णुर्जघानोग्रान्सदा वै दैत्यदानवान् ॥५९॥
शूलशक्तिगदावज्रशरासनपरश्वधान् ।
देवतानां ददौ कृत्वा विश्वकर्मा महामतिः ॥६०॥
त्रिदेवनिर्मितं स्तोत्रं सन्ध्ययोरुभयोर्जपन् ।
कुलं पुनाति पुरुषो व्याधिभिर्न च पीड्यते ॥६१॥

---

१ वैलक्ष्मानसान्–इ० पा० ।

[1] त्रिभुवनभूरिदायिने–इ० पा० । [2] वदतां वरः–इ० पा० ।

प्रजावान्सिद्धकर्मा च जीवेत्साग्रं शरच्छतम् ।
पुत्रवान्धनवांश्चैव सर्वत्र चापराजितः ।
हित्वा पुरं भूतमयं गच्छेत्सूर्यमयं पुरम् ॥६२॥

भूयोऽपि तुष्टुवुर्देवास्तथा देवर्षयो रविम् ।
वाग्भिरित्थमशेषस्य त्रैलोक्यस्य समागताः ॥६३॥

देवा ऊचुः

नमस्ते रविरूपाय सोमरूपाय ते नमः ।
नमो यजुःस्वरूपायाथर्वायांगिरसे नमः ॥६४॥

ज्ञानैकधामभूताय निर्धूततमसे नमः ।
शुद्धज्योतिःस्वरूपाय निस्तत्त्वायामलात्मने ॥६५॥

नमोऽखिलजगद्व्याप्तिस्वरूपायात्ममूर्तये ।
सर्वकारणभूताय निष्ठायै ज्ञानचेतसाम् ॥६६॥

नमोऽस्तु ज्ञेयरूपाय प्रकाशे लक्षरूपिणे ।
भास्कराय नमस्तुभ्यं तथा शब्दकृते नमः ॥६७॥

संसारहेतवे चैव संध्याज्योत्स्नाकृते नमः ।
त्वं सर्वमेतद्भगवाञ्जगद्धि भ्रमति त्वया ॥६८॥

भ्रमत्वाविद्धमखिलं ब्रह्माण्डं सचराचरम् ।
त्वदंशुभिरिदं सर्वं संस्पृष्टं जायते शुचि ॥६९॥

क्रियते त्वत्करस्पर्शाज्जलादीनां पवित्रता ।
होमदानादिको धर्मो नोपकाराय जायते ॥७०॥

तावद्यावन्न संयोगी जगत्यत्र भवाञ्छुचिः ।
प्रातर्होमं प्रशस्तं हि उदिते त्वयि जायते ॥७१॥

ऋचोऽथ सकला ह्येता यजूंषि त्वं जगत्पते ।
सकलानि च सामानि तपत्येवं जगत्सदा ॥७२॥

ऋङ्मयस्त्वं जगन्नाथ त्वमेव च यजुर्मयः ।
तथा साममयश्चैव ततो नाथ त्रयीमयः ॥७३॥

त्वमेव ब्रह्मणो रूपं परं चापरमेव च ।
मूर्तोऽमूर्तस्तथा सूक्ष्मः स्थूलरूपतया स्थितः ॥७४॥

निमेषकाष्ठादिमयः कालरूपः क्षयात्मकः ।
प्रसीद स्वेच्छया रूपं स्वतेजोमयमादिश ॥७५॥

इत्थं संस्तूयमानस्तु देवैर्देवर्षिभिस्तथा ।
मुमोच स्वं तदा तेजस्तेजसां राशिरव्ययः ॥७६॥

यत्तस्य ऋङ्मयं तेजो भविता तेन मेदिनी ।
यजुर्मयेनापि दिवं स्वयं साममयो रविः ॥७७॥

शातितास्तेजसो भागा ये च स्युर्दश पंच च ।
तस्यैव तेन शर्वस्य कृतं शूलं महात्मना ॥७८॥

चक्रं विष्णोर्वसूनां च शंकरस्य च दारुणम् ।
षण्मुखस्य तथा शक्तिः शिबिका धनदस्य च ॥७९॥

अन्येषां चासुरारीणां शस्त्राण्युग्राणि यानि वै ।
यक्षविद्याधराणां च तानि चक्रे स विश्वकृत् ॥८०॥

ततश्च षोडशं भागं बिभर्ति भगवान्रविः ।
तत्तेजसः पंचदश शातिता विश्वकर्मणा ॥८१॥

ततः सुरूपद्भानुरुत्तरानगमत्कुरून् ।
ददर्श तत्र संज्ञां च वडवारूपधारिणीम् ॥८२॥

इत्येतन्निखिलं भानोः कथितं मुनिसत्तमाः ।
शृणुयाद्यो नरो भक्त्या अश्वमेधफलं लभेत् ॥८३॥

---

१ नमस्ते रुद्ररूपाय वै नमः-इ० पा० । २ अथर्वशिरसे नमः-इ० पा० । ३ ज्ञानैकपादरूपाय-इ० पा० । ४ सूर्यस्वरूपाय-इ० पा० । ५ सर्वस्व हेतवे-इ० पा० ।

१ अपि देवैर्दिवाकरः-इ० पा० । २ त्रिदिवम् । ३ भागा इति शेषः ।

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे ब्रह्मर्षिसंवादे परिलेखवर्णनं नाम त्रयोविंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥

# चतुर्विंशत्युत्तरशततमोऽध्यायः

## सूर्यानुचरप्रवरणनामनिरुक्तिवर्णनम्

ब्रह्मोवाच

वक्ष्याम्यहं ते पुनरेव दिंडे
सूर्यस्य सर्वप्रवरप्रधानम् ।
व्योम्नः परं तिष्ठति यस्तु मग्नः
स मुच्यते रुद्र इहापि दिंडी ॥ १ ॥
स्थित्वा पुरा ब्रह्मशिरः किलासौ
प्रगृह्य तत्तस्य शिरःकपालम् ।
ततो ह्यसावाश्रममुत्तमं शिवो
बहूदकैः पुष्पफलैः समृद्धम् ॥ २ ॥
नग्नो यदा दारुवने मुनीनां
दृष्ट्वा च तं भैक्ष्यचरं सुरेशम् ।
योषित्सुताः संक्षुभितास्तुसर्वे
जग्मुर्हरं तं मुनयः सुतुष्टाः ॥ ३ ॥
स हन्यमानो मुनिमुख्यसंघै
र्गृहीतलोष्टैर्ऋषिदंडकाष्ठैः ।
विहाय दिंडिः स तु तान्सुरर्षी
स्ततोरवेर्लोकमथाजगाम ॥ ४ ॥
आगच्छमानं प्रमथास्तमूचु
र्देवेश नित्यं भ्रमसे किमर्थम् ।
स प्राह तान्पापविमोचनार्थ-
मटामि तीर्थानि सुरालयांश्च ॥ ५ ॥
ते भूय ऊचुः प्रमथास्तमेव
मत्रैव तिष्ठस्व रवेः पुरस्तात् ।
शुद्धिं तवैष प्रकरिष्यतीति
शुद्धस्ततो यास्यसि रुद्रलोकम्॥ ६ ॥
इत्येवमुक्तः प्रमथैस्तु रुद्र-
स्तत्रैव तस्थौ रवितोषणाय ।
नग्नौ जटी मुष्टिकपालपाणी
रूपेण चैवाप्रतिमस्त्रिलोके ॥ ७ ॥
उक्तः स तुष्टेन ततः सवित्रा
प्रीतोस्मि देवागमनात्तवाहम् ।
मद्दर्शनादेव भवान्विशुद्धो
दिंडीति नाम्ना भवितासि लोके॥ ८ ॥

अष्टादशैते प्रमथास्तु भानो-
श्चतुर्दशान्ये तु रवे रथस्थाः ।
द्वे देवते द्वौ च ऋषिप्रधानौ
गंधर्वसर्पावपि तावदेव ॥ ९ ॥
यक्षौ च सिद्धौ च निशाचरौ
चादित्यात्मजावप्सरसां प्रधानौ ।
वसंति ते ह्यस्तमुषश्च सूर्ये
तेषामशीतिश्चतुरोत्तरा सा ॥१०॥
इत्यादिदेवप्रवरास्तु सर्वे
धात्वर्थशब्दैश्च भवंति सिद्धाः ॥११॥

ऋषय ऊचुः

विस्तराद्ब्रूहि मे ब्रह्मन्प्रवरान्धातुशब्दजान् ।
यतश्च कौतुकं ब्रह्मन्नस्माकमिह जायते ॥१२॥

ब्रह्मोवाच

भूयस्तव प्रवक्ष्यामि दंडनायकपिंगलौ ।
राज्ञस्रौषादयश्चान्ये दिग्देवा दिंडिना सह ॥१३॥
मया सह समागम्य पुरा देवैर्विचारितम् ।
एष कारुणिकः सूर्यो युध्यते दानवैः सह ॥१४॥
ते तु लब्धवरा भूत्वा अमात्याद्या ह्यभीक्ष्णशः।
आदित्यं मन्यमानास्ते तपंतं हंतुमुद्यताः ॥१५॥
तस्मात्तेषां विघातार्थं प्रवराश्च भवामहे ।
अस्माभिः प्रतिरुद्धास्ते न द्रक्ष्यंति दिवाकरम् ॥१६॥
संमंत्र्यैवं ततः स्कंदो वामपार्श्वे रवेः स्थितः ।
दंडनायकसंज्ञस्तु सर्वलोकस्य स प्रभुः ॥१७॥
उक्तश्च स तदार्केण त्वं प्रजादंडनायकः ।
दंडनीतिकरो यस्मात्तस्मात्त्वं दंडनायकः ॥१८॥
लिखते यः प्रजानां च सुकृतं यच्च दुष्कृतम् ।
अग्निर्दक्षिणपार्श्वे तु पिंगलत्वात्स पिंगलः ॥१९॥
आश्विनौ चापि सूर्यस्य पार्श्वयोरुभयोः स्थितौ।
अश्वरूपात्समुपन्नौ तेन तावश्विनौ सुरौ ॥२०॥
द्वारपालौ स्मृतौ तस्य राज्ञः श्रेष्ठौ महाबलौ ।
कार्त्तिकेयः स्मृतो राज्ञः श्रेष्ठश्चापि हरः स्मृतः ॥२१॥

राजदीप्तौ स्मृतो धातुर्नकारस्तस्य प्रत्ययः ।
सुरसेनापतित्वेन स यस्माद्दीप्यते सदा ।
तस्मात्स कार्तिकेयस्तु नाम्ना राज्ञ इति स्मृतः ॥२२॥
स्रुगतौ च स्मृतो धातुर्यस्य स प्रत्ययः स्मृतः।
गच्छतीति रहस्तस्मात्पर्यायात्स्रोष उच्यते ॥२३॥
प्रथमं यद्भवेद्द्वारं धर्मार्थाभ्यां समाश्रितम् ।
तत्रैतौ संस्थितौ देवौ लोकपूज्यौ द्विजोत्तमाः ॥२४॥
द्वितीयायां तु कक्षायामप्रधृष्टौ व्यवस्थितौ ।
पक्षिप्रेताधिपौ नाम्ना स्मृतौ कल्माषपक्षिणौ ॥२५॥
वर्णस्य शबलत्वाच्च यमः कल्माष उच्यते ।
पक्षावस्येति यः पक्षी गरुडः परिकीर्तितः ॥२६॥
स्थितो दक्षिणतस्तस्य दंडहस्तसमन्वितः ।
उत्तरेण स्थितोऽर्कस्य कुबेरश्च विनायकः ॥२७॥
कुबेरो धनदो ज्ञेयो हस्तिरूपो विनायकः ।
कुत्सया कुप्यता शप्तं कुशरीरमजायत ।
कुबेरः कुशरीरत्वात्स नाम्ना धनदः स्मृतः ॥२८॥
नायकः सर्वसत्त्वानां तेन नायक उच्यते ।
विविधं नयते यस्मात्स तु तस्माद्विनायकः ॥२९॥
रैवतश्चैव दिंडिश्च तौ रवेः पूर्वतः स्थितौ ।
ततो दिंडिः स्मृतो रुद्रो रेवतस्तनयो रवेः ॥३०॥
प्लुतं गच्छत्यसौ यस्मात्सर्वलोकनमस्कृतः ।
रेवृप्लवगतौ धातू रेवतस्तेन स स्मृतः ॥३१॥
डीङ्गतावस्य वै धातोर्दिंडिशब्दो निपात्यते ।
डयतेऽसौ सदा दिंडी तेन दिंडी प्रकीर्तितः ॥३२॥
इत्येते प्रवराः प्रोक्ता धात्वर्था नैगमैः शुभैः ।
एषां संक्षेपतो भूयः संख्यां वो निगदामि वै ॥३३॥
अश्विनौ तौ ततो ज्ञेयौ दंडनायकपिंगलौ ।
तौ सूर्यद्वारपौ ज्ञेयौ राज्ञस्रोषौ ततः स्मृतौ ॥३४॥
रेवतश्चैव दिंडिश्च इत्येते प्रवरा मया ।
अष्टादश समाख्याताः संक्षेपात्संख्यया मया ॥३५॥
इत्येभिर्नामभिस्त्वन्ये दानवानां जिघांसया ।
परिवार्य स्थिताः सूर्यं नानाप्रहरणायुधाः ॥३६॥
सरूपाश्चान्यरूपाश्च विरूपाः कामरूपिणः ।
परिवार्य स्थिताः सूर्यं गरुडश्च महाबलः ॥३७॥
धातुर्दिविति वै प्रोक्तो क्रीडायां स तु उच्यते ।
क्रीडंते दिवि वै यस्मात्तस्मात्ते दैवताः स्मृताः॥३८॥
ऋचो यजूंषि सामानि यान्युक्तानीह वै मया ।
नानारूपैः स्थितान्येव रवेस्तानि समन्ततः ॥३९॥

सुमंतुरुवाच

इत्येवमुक्तवान्ब्रह्मा ऋषीणां पृच्छतां पुरा ।
ते श्रुत्वाराध्य देवेशं संसिद्धा दिवि संस्थिताः ॥४०॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे ब्रह्मर्षि संवादे प्रवरवर्णनं नाम चतुर्विंशत्युत्तरशततमोऽध्यायः ॥ १२४ ॥

---

## पञ्चविंशत्युत्तरशततमोऽध्यायः

### व्योममाहात्म्यवर्णने भुवनकोशवर्णनम्

शतानीक उवाच

यदेतद्दृश्यते व्योम सूर्यस्य पुरतो द्विज ।
तदुच्यते किमात्मा च कथंभूतश्च कथ्यताम् ॥ १ ॥

सुमंतुरुवाच

हंत व्योम प्रवक्ष्यामि सूर्यप्रहरणं शुभम् ।
यदात्मकं हि यत्प्रोक्तं यथा वसंति देवताः ॥ २ ॥
पुरस्ताच्च चतुःशृंगं तद्व्योमायतनं रवेः ।
व्योमशब्दं चतुःशृंगं सर्वदेवमयं च यत् ॥ ३ ॥
गैरिकार्णवसंभूतं यदंतर्गर्भमाश्रितम् ।
तत्रोत्पन्नमिदं व्योम कलेर्व्योम मही स्मृता ॥ ४ ॥
वरुणस्य यथा पाशो हुङ्कारो वेधसो यथा ।
विष्णोश्चापि यथा चक्रं त्रिशूलं त्र्यंबकस्य च॥ ५ ॥
इन्द्रस्य च यथा वज्रं तथा व्योम रवेः स्मृतम् ।
तस्मिन्व्योम्नि त्रयस्त्रिंशत्क्रीडन्तो यज्ञियाःसुराः॥ ६ ॥
हरश्च वर्षशुद्धश्च त्र्यंबकश्चापराजितः ।
वृषाकपिश्च शंभुश्च कपर्दी रैवतस्तथा ।
ईश्वरो भुवनश्चैते रुद्रा एकादश स्मृताः ॥ ७ ॥

---

१ तत्–इ० पा० ।

१ ऋगतावस्य वै धातुः–इ०पा० । २ ऋच्छतीति–इ० पा० ।

आदित्यानां च नामानि विष्णोश्चक्रस्य दीयताम्।
अर्यमा च तथा मित्रो भगोऽथ वरुणस्तथा ॥ ८ ॥
विवस्वान्त्सविता चैव पूषा त्वष्टा तथैव च ।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः॥ ९ ॥
ध्रुवो धरश्च सोमश्च आपश्चैवाऽनिलोनलः ।
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्तिताः ॥१०॥
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावुभौ ।
विश्वेदेवान्प्रवक्ष्यामि नामतस्तान्निबोधत ॥११॥
ऋतुर्दक्षो वसुः सत्यः कालकामौ धृतिः कुरुः ।
शंकुमात्रो वामनश्च विश्वेदेवा दश स्मृताः ॥१२॥
वर्तमाना इमे देवा भविष्यानंतरे शृणु ।
यमश्च तुंषिताश्चैव वसैवो वशवर्तिनः ॥१३॥
सत्याश्च भूतरजसः साध्याश्च तदनंतराः ।
षट्सु मन्वंतरेष्वेवं देवा द्वादशद्वादशं ।
पारावतास्तथा चान्ये ते ह्यासंस्तुषितैः सह ॥१४॥
साध्यान्देवान्प्रवक्ष्यामि नामतस्तान्निबोध मे ।
मनोऽनुमंता प्राणश्च नरो नारायणस्तथा ॥१५॥
वृत्तिलम्बो मनुश्चैव समो धर्मश्च वीर्यवान् ।
वित्तस्वामी प्रभुश्चैव साध्या द्वादश कीर्तिताः ॥१६॥
एते यज्ञभुजो देवाः सर्वलोकेषु पूजिताः ।
आदित्यामेव ते धीर कश्यपस्यात्मजाःस्मृताः ॥१७॥
विश्वे च वसवः साध्या विज्ञेया धर्मसूनवः ।
एवं धर्मसुतः सोमस्तृतीयो वसुरिष्यते ॥१८॥
धर्मोपि ब्रह्मणः पुत्रः पुराणे निश्चयं गतः ।
अथ चेन्द्रान्वसूंश्चैव नामभिश्च निबोध मे ॥१९॥
स्वायंभुवो मनुः पूर्वं ततः स्वारोचिषः स्मृतः ।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥२०॥
इत्येते षडतिक्रांताः सप्तमः सांप्रतो मनुः ।
वैवस्वतेति विज्ञेयो भाविष्याः सप्त चापरे ॥२१॥
एषामाद्योर्कसावर्णिर्ब्रह्मसावर्णिरेव च ।
तस्माच्च भवसावर्णिर्धर्मसावर्णिरित्युत ॥२२॥
पंचमो दक्षसावर्णिः सौवर्णिः पंच कीर्तिताः ।
रौच्यो भौत्यश्च द्वावन्यावित्येते मनवः स्मृताः ॥२३॥

इंद्रस्तु विष्णुभुग्ज्ञेयो विद्युतिस्तदनंतरम् ।
विभुः प्रभुश्चैव शिखी तथैव च मनोजवः ॥२४॥
ओजस्वी सांप्रतस्त्विद्रो बलिर्भाव्यस्ततः परम् ।
अद्भुतस्त्रिदिवश्चैव दशमस्त्विद्र उच्यते ॥२५॥
सुसात्त्विकश्च कीर्तिश्च शतधामा दिवस्पतिः ।
इति भूता भविष्याश्च इंद्रा ज्ञेयाश्चतुर्दश ॥२६॥
कश्यपोऽत्रिर्वशिष्ठश्च भरद्वाजश्च गौतमः ।
विश्वामित्रो जमदग्निः सप्तैते ऋषयः स्मृताः ॥२७॥
अतः परं प्रवक्ष्यामि मरुतोऽग्निपरिग्रहान् ।
प्रवहोथावहश्चैव उद्वहः संवहस्तथा ॥२८॥
विवहो निवहश्चैव परिवाहस्तथैव च ।
अंतरिक्षचरा ह्येते पृथङ्मार्गविसारिणः ॥२९॥
सूर्योऽग्निश्च शुचिर्नाम्ना वैद्युतः पावकः स्मृतः ।
निर्मथः पवमानोऽग्निस्त्रयः प्रोक्ता इमेग्नयः ॥३०॥
अग्नीनां पुत्रपौत्रास्तु चत्वारिंशत्तथैव तु ।
मरुतामपि सर्वेषां विज्ञेयाः सप्तसप्तकाः ॥३१॥
ऋतुः संवत्सरोऽह्यग्निर्ऋतवस्तस्य जज्ञिरे ।
ऋतुपुत्राश्च वै पंच इति सर्गः सनातनः ॥३२॥
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयस्तु चतुर्थस्त्वनुवत्सरः ॥३३॥
पंचमो वत्सरस्तेषामित्येवं पंच ते स्मृताः ।
तेषु संवत्सरो ह्यग्निः सूर्यस्तु परिवत्सरः ॥३४॥
सोम इद्वत्सरस्तेषां वायुश्चैवानुवत्सरः ।
रुद्रस्तु वत्सरो ज्ञेयः पंचैतौ युगदेवताः ॥३५॥
आर्तवाः पितरो ज्ञेया ये जाताः ऋतुसूनवः ।
पितामहास्तु विज्ञेयाः पंचाब्दा ब्रह्मणः सुताः ॥३६॥
सौम्या बर्हिषदश्चैव अग्निष्वात्ताश्च ये त्रयः ।
एते वै पितरस्तेषां ये जीवत्पितृका नराः ॥३७॥
आदित्यश्चैव सोमश्च लोहितांगो बुधस्तथा ।
बृहस्पतिश्च शुक्रश्च तथा हेलिसुतश्च यः ॥३८॥
उपरागः शिखोचोभौ नवैते नु ग्रहाः स्मृताः ।
त्रैलोक्यस्य त्विमे नित्यं भावाभावनिवेदकाः ॥३९॥
आदित्यश्चैव सोमश्च द्वावेतौ मंडलग्रहौ ।
राहुश्छायाग्रहस्तेषां शषास्तारा ग्रहाः स्मृताः ॥४०॥

---

१ तुषितश्चैव–इ० पा० । २ तथैव वशवर्तिनः–इ० पा० । ३ वै स्मृताः–इ० पा० । ४ हंसो धर्मश्च–इ० पा० । ५ एकवचनमार्षम् ।

१ सुशांतिश्च सुकीर्तिश्च–इ० पा० । २ यातुधानो–इ० पा० । ३ अन्तरिक्षवहाः–इ० पा० । ४ पंचाब्दा ये युगात्मकाः–इ० पा० ।

नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः ।
पठ्यते चाग्निरादित्य उदकश्चंद्रमाः स्मृतः ॥४१॥
आदित्यः पठ्यते ब्रह्मा विष्णुस्तेषां तु चंद्रमाः ।
महेश्वरस्तु विज्ञेयस्तृतीयस्तारकग्रहः ॥४२॥
कश्यपस्य सुतः सूर्यः सोमो धर्मसुतः स्मृतः ।
देवासुरगुरूः द्वौ तु नामतस्तौ महाग्रहौ ॥४३॥
प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती ।
बुधः सोमात्मजः श्रीमान्छनी रविसुतः स्मृतः ॥४४॥
सिंहिकायाः सुतो राहुः केतुस्तु ब्रह्मणः सुतः ।
सर्वेषां च ग्रहाणां हि अधस्ताच्चरते रविः ॥४५॥
ततो दूरं स्मृतं तावद्विधोर्नक्षत्रमण्डलम् ।
नक्षत्रेभ्यः कुजबुधौ श्वेताह्वस्तदनंतरम् ॥४६॥
तस्मान्माहेश्वरश्चोर्द्ध्वं धिषणस्तदनन्तरम् ।
कृष्णश्चोर्ध्वं ततस्तस्मादथ चित्रशिखंडिजः ॥४७॥
एषामेव क्रमः प्रोक्तश्चासक्तं त्रिविदं ध्रुवे ।
आदित्यनिलयो राहुः कदाचित्सोममार्गगः ॥४८॥
सूर्यमंडलसंस्थस्तु शिखी सर्पति सर्वदा ।
नवयोजनसाहस्त्रो विस्तारो भार्गवस्य तु ॥४९॥
द्विगुणः सूर्यविस्ताराद्विस्तारः शनिनः स्मृतः ।
त्रिगुणं मंडलं ज्ञेयं नाक्षत्रं विस्तराद्विधोः ॥५०॥
नक्षत्रमंडलात्तत्र पादहीनो बृहस्पतिः ।
बृहस्पतेः पादहीनः शुक्रोंगारक एव हि ॥५१॥
विस्तारो मंडलानां तु पादहीनस्तयोर्बुधः ।
बुधतुल्यानि ऋक्षाणि सर्वऋक्षाणि यानि तु ॥५२॥
योजनान्यर्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ।
राहुः सूर्यप्रमाणश्च कदाचित्सोमसंनिभः ॥५३॥
नक्षत्रग्रहमानस्तु केतुस्त्वनियतः स्मृतः ।
अविज्ञातगतिश्चैव चंचलत्वान्नराधिप ॥५४॥
तथालक्षितरूपस्तु बहुरूपधरो हि सः ।
भूर्लोकः पृथिवी प्रोक्ता अंतरिक्षं भुवः स्मृतम् ॥५५॥

स्वर्लोकस्त्रिदिवं ज्ञेयं शेषादूर्ध्वं यथाक्रमम् ।
भूपतिस्तु सदा त्वग्निस्तेनासौ भूपतिः स्मृतः ॥५६॥
वायुर्नभस्पतिस्तेन तथा सूर्यो दिवस्पतिः ।
गंधर्वाप्सरसश्चैव गुह्यकाः सिद्धराक्षसाः ॥५७॥
भूर्लोकवासिनः सर्वे अंतरिक्षचराञ्छृणु ।
मरुतः सप्तमस्कंधे रुद्रास्तत्रैव चाश्विनौ ॥५८॥
आदित्या वसवः सर्वे तथैव च गवां गणाः ।
चतुर्थे तु महर्लोके वसंते कल्पवासिनः ॥५९॥
प्रजानां पतिभिः सर्वैः सहिताः कुरुनंदन ।
जनलोके पंचमे च वसंते भूमिदाः सदा ॥६०॥
ऋतुः सनत्कुमाराद्या वैराजश्च तथाश्रयाः ।
सत्यस्तु सप्तमे लोके ह्यपुनर्मार्गगामिनाम् ॥६१॥
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ।
इतिहासविदो यत्र क्रीडंते कुरुनंदन ॥६२॥
शृण्वंति च पुराणानि ये सदा भीमनंदन ।
महीतलात्सहस्राणां शतादूर्ध्वं दिवाकरः ॥६३॥
शैतयोजनकोटचस्तु भूमेरूर्ध्वं ध्रुवः स्थितः ।
ततो विंशतिलक्षस्तु त्रैलोक्योत्सेध उच्यते ॥६४॥
द्विगुणैस्तु सहस्रैस्तु योजनानां शतेषु च ।
लोकांतरमथो चैवं ध्रुवादूर्ध्वं विधीयते ॥६५॥
देवदानवगंधर्वा यक्षराक्षसपन्नगाः ।
भूता विद्याधराश्चैव अष्टौ ते देवयोनयः ॥६६॥
यस्मिन्व्योम्नि त्विमे लोकाः सप्त वै सप्रतिष्ठिताः
मरुतः पितरो ह्येते तस्मिन्नेवाग्नयो ग्रहाः ॥६७॥
यास्त्वष्येताः समाख्याता मयाष्टौ देवयोनयः ।
मूर्ताश्चामूर्तयश्चैव सर्वास्ता व्योम्नि संस्थिताः ॥६८॥
एवंविधमिदं व्योम सर्वव्योममयं स्मृतम् ।
सर्वदेवमयं चैव सर्वग्रहमयं तथा ॥६९॥
तस्माद्यो ह्यर्चयेद्व्योम तेन सर्वेऽर्चिताः सुराः ।
तस्मात्सर्वप्रयत्नेन शुभार्थी व्योम चार्चयेत् ॥७०॥
यस्त्वर्चते सदा व्योम भक्त्या श्रद्धासमन्वितः ।
वृषध्वजसदो राजन्स गच्छेन्नात्र संशयः ॥७१॥

१ सोममंडल-इ०पा० । २ ब्राह्मणस्य तु-इ० पा० । ३ द्विगुणम्-इ०पा० । ४ तस्माद्ग्रहणमात्रं तु-इ० पा० ।

१ सप्तयोजन—इ० पा० ।

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्योममाहात्म्ये भुवनकोशवर्णनं नाम पंचविंशत्युत्तरशततमोऽध्यायः ॥१२५॥

# षड्विंशत्युत्तरशततमोऽध्यायः

## व्योममाहात्म्ये भुवनकोशवर्णने लोकलोकपाललोकवर्णनम्

सुमंतुरुवाच

आकाशं खं दिशो व्योम अन्तरिक्षं नभोंऽबरम् ।
पुष्करं गगनं मेरुर्विपुलं च बिलं तथा ॥ १ ॥
आपोच्छिद्रं तथा शून्यं तमो वै रोदसी तथा ।
नामान्येतानि ते व्योम्नः कीर्तितानि महीपते ॥ २ ॥
लवणक्षीरदध्यम्लघृत मध्विक्षवस्तथा ।
स्वादूदकश्च सप्तैते समुद्राः परिकीर्तिताः ॥ ३ ॥
हिमवान्हेमकूटश्च निषधो नील एव च ।
श्वेतश्च शृंगवांश्चैव षडेते वर्ष पर्वताः ॥ ४ ॥
मध्यसंस्थस्तथैतेषां महाराजतपर्वतः ।
माहेन्द्री चाप्यथाग्नेयी याम्या च नैर्ऋती तथा॥ ५ ॥
वारुणी चाथ वायव्या सौम्येशानी तथैव च ।
एताः पुर्यस्तु देवानां तथोपरि समाश्रिताः ॥ ६ ॥
पृथिव्यां तु स्थितो वीर लोकालोकस्तु पर्वतः ।
ततश्चंडकपालं तु तस्मात्तत्परतस्तु यः ॥ ७ ॥
ततोऽग्निवायुराकाशं ततो भूतादिरुच्यते ।
ततो महानहंकारः प्रकृतिः पुरुषस्ततः ॥ ८ ॥
पुरुषादीश्वरो ज्ञेय ईश्वरेणावृतं जगत् ।
ईश्वरो भगवान्भानुस्तेनेदं पूरितं जगत् ॥ ९ ॥
सहस्रांशुर्महातेजाश्चतुर्बाहुर्महाबलः ।
ऊर्ध्वमप्यथ लोकास्तु प्राङ्मया ये प्रकीर्तिताः॥१०॥
भूयस्तान्संप्रवक्ष्यामि अंडावरणकारकान् ।
भूर्लोकस्तु भुवर्लोकस्तृतीयः परिकीर्तितः ॥११॥
महर्जनस्तपः सत्यः सप्त लोकाः प्रकीर्तिताः ।
ततस्त्वंडकपालं तु तस्माच्च परस्तपः ॥१२॥
ततोऽग्निर्वायुराकाशं ततो भूतादिरुच्यते ।
ततो महान्प्रधानश्च प्रकृतिः पुरुषस्ततः ॥१३॥
पुरुषादीश्वरो ज्ञेय ईश्वरेणावृतं जगत् ।
भूमेरधस्तात्सप्तैव लोकानभिमताञ्छृणु ॥१४॥
तलं सुतलपाताले तलातलं तथातलम् ।
वितलं च कुरुश्रेष्ठ सप्तमं च रसातलम् ॥१५॥
ततोऽग्निर्वायुराकाशं ततो भूतादिरुच्यते ।
ततो महान्प्रधानश्च प्रकृतिः पुरुषस्ततः ॥१६॥
पुरुषादीश्वरो ज्ञेय ईश्वरेणावृतं जगत् ।
एवं मेरोः प्रमाणं तु सर्वमेतत्प्रकीर्तितम् ॥१७॥
चतुरस्रश्चतुः शृंगः स मेरुः कांचनः शुभः ।
पृथिव्यां संस्थितो मध्ये सिद्ध गंधर्वसेवितः ॥१८॥
चतुर्भिः कांचनैः शृंगैर्दिव्यैर्दिवमिवोल्लिखन् ।
योजनानां सहस्राणि चतुराशीतिरुच्छ्रितः ॥१९॥
प्रविष्टः षोडशाधस्तादष्टाविंशतिविस्तृतः ।
विस्तारस्त्रिगुणश्चास्य परिणाहस्ततः स्मृतः ॥२०॥
तस्य[1] सौमनसं नाम शृंगमेकं तु कांचनम् ।
द्वितीयं पद्मरागाभं ज्योतिष्कं नाम नामतः ॥२१॥
तृतीयं नामतश्चित्रं सर्वदेवमयं शुभम् ।
चतुर्थं राजतं शुक्लं चन्द्रौजस्कमिति स्मृतम् ॥२२॥
यत्तु सौमनसं नाम शृंगं गांगेयमुच्यते ।
तदेव चोदयो नाम्ना यत्रोद्यन्दृश्यते रविः ॥२३॥
उत्तरेण परिक्रम्य जंबूद्वीपं दिवाकरः ।
दृश्यो भवति भूतानां शिखरं च समास्थितः ॥२४॥
कांचनस्य च शैलस्य तेजसार्कस्य चाहते ।
उभे संध्ये प्रकाशेते आताम्रे पूर्वपश्चिमे ॥२५॥
शृंगे सौमनसे सूर्य उत्तिष्ठत्युत्तरायणे ।
ज्योतिषे दक्षिणे चापि विषुवे मध्यतस्तयोः ॥२६॥
ईशेन्द्रोद्दिश्च ऐशान्यां तत्राग्निः पूर्वदक्षिणे ।
नैर्ऋतेऽपि ततो ज्ञेयो वायव्ये मरुतस्तथा ॥२७॥
मध्ये तु कंजजःसाक्षाद्ग्रहा ज्योतींषि चैव हि ।
आदित्यस्तेन रूपेण तस्मिन्व्योम्नि प्रतिष्ठितः ॥२८॥
इदं देवमयं व्योम तथा लोकमयं स्मृतम् ।
पूर्वकोणस्थिते शृंगे स्थितः शुक्रो महीपते ॥२९॥
हेलिजश्चापरे ज्ञेयो धननाथस्तथापरे ।
सोमश्चापि चतुर्थे तु स्थितः शृंगे जनाधिप ॥३०॥
मध्ये केशास्थितो राजन्हुंकारश्च पिनाकिनः ।
शृंगे पूर्वोत्तरे राजन्स्थितो देवो विधुक्षये[2] ॥३१॥

१ अण्डकटाहं तु–इ० पा० ।

१ तस्मिन्सौमनसे शृंगे–इ० पा० । २ विधुक्षयः–इ० पा० ।

ततः स्थितो महादेवो गोपतिर्लोकपूजितः ।
पूर्वाग्नेयीस्थिते शृंगे स्थितो वै शांडिलः सुतः॥३२॥
ततः स्थितो महातेजाः कीनाशो हेलिनंदनः ।
स्थितो वै नैर्ऋते शृंगे विरूपाक्षो महाबलः ॥३३॥
तस्मादनंतरो देवः स्थितो वै यादसां पतिः ।
ततः स्थितो महातेजा वीरमित्रो महाबलः ॥३४॥
वायव्यं शृंगमाश्रित्य सर्वदेवनमस्कृतम् ।
ततः स्थितो दशबलो नरमारुह्य भारत ॥३५॥
ब्रह्मा मध्ये स्थितो देवो ह्यनंतश्चाध एव हि ।
उपेंद्रशंकरौ देवौ ब्रह्मणोंते समास्थितौ ॥३६॥
एष मेरुस्तथा व्योम एष धर्मश्च पठ्यते ।
सर्वदेवमयश्चायं मेरुर्व्योम इति स्मृतः ॥३७॥
तथा वेदमयश्चापि पठ्यते नात्र संशयः ।
शृंगाणि वेदाश्चत्वारः पूर्वशृंगादयो विदुः ॥३८॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे व्योममाहात्म्यवर्णनं नाम षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्युत्तरशततमोऽध्यायः

### सप्तमीकल्पे सांबोपाख्याने सूर्यप्रसादवर्णनम्

शतानीक उवाच

कथमाराधितः सूर्यः सांबेनामिततेजसा ।
विमुक्तस्तु कथं रोगैर्ब्रूहि मां द्विजसत्तम ॥ १ ॥

सुमन्तुरुवाच

साधु पृष्टोऽस्मि राजेंद्र शृणु सांबकथां पुरा ।
विस्तराद्वच्मि ते सर्वां कथां पापविमोचिनीम् ॥ २ ॥
पुरा संश्रुत्य माहात्म्यं भास्करस्य स नारदात् ।
विनयादुपसंगम्य वचः पितरमब्रवीत् ॥ ३ ॥
कश्मलेनाभिभूतोऽस्मि मलेन व्याधिनाच्युत ।
वैद्यैरोषधिभिश्चापि न शांतिर्मम विद्यते ॥ ४ ॥
वनं गच्छामि भगवन्ननुज्ञां दातुमर्हसि ।
शिवेन पुंडरीकाक्ष ध्याय मां पुरुषोत्तम ॥ ५ ॥
अनुज्ञातः स कृष्णेन सिंधोरुत्तरकूलतः ।
गत्वा संतारयामास चंद्रभागां महानदीम् ॥ ६ ॥
ततो मित्रवनं गत्वा तीर्थं त्रैलोक्यविश्रुतम् ।
उपवासपरः सांबः शुष्को धमनि संततः ॥ ७ ॥
आराधनार्थं सूर्यस्य गुह्यं स्तोत्रं जजाप ह ।
वेदैश्चतुर्भिः समितं पुराणाश्रयबृंहितम्[1] ॥ ८ ॥
यदेतन्मंडलं शुक्लं दिव्यं ह्यजरमव्ययम् ।
युक्तं मनोजवैरश्वैर्हारीतैर्ब्रह्मवादिभिः[2] ॥ ९ ॥
आदिरेष[1] हि भूतानामादित्य इति संज्ञितः ।
त्रैलोक्यचक्षुरेवात्र परमात्मा प्रजापतिः ॥१०॥
एष वै मंडले ह्यस्मिन्पुरुषो दीप्यते महान् ।
एष विष्णुरचिंत्यात्मा ब्रह्मा चैव पितामहः ॥११॥
रुद्रो महेंद्रो वरुण आकाशं पृथिवी जलम् ।
वायुः शशांकः पर्जन्यो धनाध्यक्षो विभावसुः ॥१२॥
य एष मंडले ह्यस्मिन्पुरुषो दीप्यते महान् ।
एकः साक्षान्महादेवो वृत्रमंडनिभः सदा ॥१३॥
कालो ह्येष महाबाहुर्निबोधोत्पत्तिलक्षणः ।
य एष मंडले ह्यस्मिंस्तेजोभिः पूरयन्महीम् ॥१४॥
भ्राम्यते ह्यव्यवच्छिन्नो वातैर्योऽमृतलक्षणः ।
नातः परतरं किंचित्तेजसा विद्यते क्वचित् ॥१५॥
पुष्णाति सर्वभूतानि एष एव सुधामृतैः ।
अंतस्थान्म्लेच्छजातीयांस्तिर्यग्योनिगतानपि ॥१६॥
कारुण्यात्सर्वभूतानि पासि त्वं च विभावसो ।
श्वित्रकुष्ठ्यंधबधिरान्पंगूंश्चापि तथा विभो ॥१७॥
प्रपन्नवत्सलो देव कुरुते नीरुजो भवान् ।
चक्रमंडलमग्नांश्च निर्धनाल्पायुषस्तथा ॥१८॥
प्रत्यक्षदर्शी त्वं देव समुद्धरसि लीलया ।
का मे शक्तिःस्तवैः स्तोतुमार्तोऽहं रोगपीडितः॥१९॥
स्तूयसे त्वं सदा देवैर्ब्रह्मविष्णुशिवादिभिः ।
महेंद्रसिद्धगंधर्वैरप्सरोभिः सगुह्यकैः ॥२०॥

१ मंत्रम्-इ पा० । २ ब्राह्मणादिभिः-इ० पा० ।

१ अनादिरेष भूतानामाद्योर्क इति संज्ञितः-इ० पा० ।

स्तुतिभिः किंः पवित्रैर्वा तव देव समीरितैः ।
यस्य ते ऋग्यजुः साम्नां त्रितयं मंडलास्थितम्॥२१॥
ध्यानिनां त्वं परं ध्यानं मोक्षद्वारं च मोक्षिणाम्।
अनंततेजसाक्षोभ्यो ह्यचिंत्याव्यक्तनिष्कलः ॥२२॥
यदयं व्याहृतः किंचित्स्तोत्रेस्मिञ्जगतः पतिः ।
आर्तिं भक्तिं च विज्ञाय तत्सर्वं ज्ञातुमर्हसि ॥२३॥
तमुवाच ततः सूर्यः प्रीत्यै जांबवतीसुतम् ।
प्रीतोऽस्मि तपसा वत्स ब्रूहि तन्मां यदिच्छसि॥२४॥

सांब उवाच

यदि प्रसन्नो भगवानेष एव वरो मम ।
भक्तिर्भवतु मेऽत्यर्थं त्वयि देव सनातन ॥२५॥

श्रीसूर्य उवाच

भूयस्तुष्टोऽस्मि भद्रं ते वरं वरय सुव्रत ।
स द्वितीयं वरं वव्रे तदैव वरदं विभुम् ॥२६॥
मलः शरीरसंस्थो मे त्वत्प्रसादात्प्रणश्यतु ।
येन मे शुद्धमखिलं वपुर्भवतु गोपते ॥२७॥

सुमंतुरुवाच

स तथास्त्विति तेनोक्तो भास्करेण महात्मना ।
तां मुमोच रुजं सांबो देहात्त्वचमिवोरगः ॥२८॥
ततो रूपेण दिव्येन रूपवानभवत्पुनः ।
प्रणम्य शिरसा देवं पुरतोऽवस्थितोऽभवत् ॥२९॥

श्रीसूर्यउवाच

भूयश्च शृणु मे सांब तुष्टोहं यद्ब्रवीमि ते ।
अद्य प्रभृति त्वन्नाम्ना मम स्थानानि सुव्रत ।
क्षितौ ये स्थापयिष्यंति तेषां लोकाः सनातनाः॥३०॥
स्थापयस्वैव मामस्मिंश्चंद्रभागातटे शुभे ।
तव नाम्ना च सांबेदं परां ख्यातिं गमिष्यति ॥३१॥
कीर्तिस्तवाक्षया लोके ख्यातिं यास्यति सुव्रत ।
भूयश्च ते प्रदास्यामि प्रत्यहं स्वप्नदर्शनम् ॥३२॥

सुमन्तुरुवाच

एवं दत्त्वा वरं तस्मै वृष्णिसिंहाय चापरम् ।
प्रत्यक्षदर्शनं दत्त्वा तत्रैवांतरधाद्धरिः ॥३३॥
य इदं पठते स्तोत्रं त्रिकालं भक्तिमान्नरः ।
त्रिसप्तशतमावर्त्य होमं वा सप्तरात्रकम् ॥३४॥
राज्यकामो लभेद्राज्यं धनकामो लभेद्धनम् ।
रोगार्तो मुच्यते रोगाद्यथा सांबस्तथैव सः ॥३५॥
सूर्यलोकं व्रजेच्चापि भक्त्यापूज्य दिवाकरम् ।
रमते च तथा तस्मिन्देवैश्च परिवारितः ॥३६॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने सूर्यप्रसादवर्णनं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥

## अष्टाविंशत्युत्तरशततमोऽध्यायः

### सांबेन सूर्यस्तवकरणम्, सूर्येण सांबाय वरप्रदानम्

सुमंतुरुवाच

अस्तावीच्च ततः सांबः कृशो धमनिसंततः ।
राजन्नामसहस्रेण सहस्रांशुं दिवाकरम् ॥ १ ॥
खिद्यमानं ततो दृष्ट्वा सूर्यः कृष्णात्मजं तदा ।
स्वप्नेस्मै दर्शनं दत्त्वा पुनर्वचनमब्रवीत् ॥ २ ॥

श्रीसूर्य उवाच

सांबसांब महाबाहो शृणु जांबवतीसुत ।
अलं नामसहस्रेण पठ चेमं शुभं स्तवम् ॥ ३ ॥
यानि गुह्यानि नामानि पवित्राणि शुभानि च ।
तानि ते कीर्तयिष्यामि प्रयत्नादवधारय ॥ ४ ॥
वैकर्तनो विवस्वांश्च मार्तंडो भास्करो रविः ।
लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः ॥ ५ ॥
लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ।
तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ ६ ॥
गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ।
एकविंशतिरित्येष स्तव इष्टस्सदा मम ॥ ७ ॥
शरीरारोग्यदश्चैव धनवृद्धियशस्करः ।
स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ ८ ॥
य एतेन महाबाहो द्वे संध्येऽस्तमनोदये ।
स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते ॥ ९ ॥

मानसं वाचिकं वापि कायिकं यच्च दुष्कृतम् ।
एकजाप्येन तत्सर्वं प्रणश्यति ममाग्रतः ॥१०॥
एष जप्यश्च होमश्च संध्योपासनमेव च ।
बलिमंत्रोऽर्घ्यमंत्रोथ धूपमंत्रस्तथैव च ॥११॥
अन्नप्रदाने स्नाने च प्रणिपाते प्रदक्षिणे ।
पूजितोऽयं महामंत्रः सर्वपापहरः शुभः ॥१२॥
एवमुक्त्वा स भगवान्भास्करो जगतां पतिः ।
आमंत्र्य कृष्णतनयं तत्रैवांतर्हितोऽभवत् ॥१३॥
सांबोपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनम् ।
प्रीतात्मा नीरुजःश्रीमांस्तस्माद्रोगाद्विमुक्तवान्॥१४॥

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबस्तववर्णनं नामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥१२८॥

---

# एकोनत्रिंशदुत्तरशततमोऽध्यायः

## सांबाय सूर्यप्रतिमालाभः प्रतिमया स्वस्थापनस्थानकथनम्

सुमंतुरुवाच

अथ लब्धवरः सांबो वरं प्राप्य पुरातनम् ।
मन्यमानस्तदाश्चर्यं प्रहृष्टेनांतरात्मना ॥ १ ॥
पूर्वाभ्यासेन तेनैव सार्धमन्यैस्तपस्विभिः ।
स्नापनार्थं नातिदूरं चंद्रभागां नदीं ययौ ॥ २ ॥
कृत्वात्ममंडलाकारं श्रद्दधानो दिनेदिने ।
सस्नौ संचिंतयामास किं रूपं स्थापयाम्यहम् ॥ ३ ॥
स स्नातः सहसैवाथ प्रणम्य तु प्रभावतीम् ।
उह्यमानां जलौघेन प्रतिमां संमुखीं रवेः ॥ ४ ॥
तां दृष्ट्वा तस्य वीरस्य समुत्पन्नमिदं यथा ।
देवेन यत्तदाज्ञप्तं तदिदं नात्र संशयः ॥ ५ ॥
स तामुत्तार्य सलिलादानीय च महीपते ।
तस्मिन्मित्रवनोद्देशे स्थापयामास तां तदा ॥ ६ ॥
निधाय प्रतिमाँल्लोके सांबस्तस्य महात्मनः ।
मित्रं मित्रवने रम्ये स्थापयित्वा विधानतः ॥ ७ ॥
ततस्तामेव पप्रच्छ प्रणम्य प्रतिमां रवेः ।
केनेयं निर्मिता नाथ भवतो ह्याकृतिः शुभा ॥ ८ ॥
प्रतिमा तमुवाचाथ शृणु सांब ब्रुवे स्वयम् ।
निर्मिता येन चाप्येषा मदीया पुरुषाकृतिः ॥ ९ ॥
ममातितेजसाविष्टं रूपमासीत्पुरातनम् ।
असह्यं सर्वभूतानां ततोऽस्म्यभ्यर्चितः सुरैः ।
सह्यं भवतु ते रूपं सर्वप्राणभृतामिति ॥१०॥
ततो मया समादिष्टो विश्वकर्मा महातपः ।
तेजसां शातनं कुर्वन्रूपं निर्वर्तयस्व मे ॥११॥
ततस्तु मत्समादेशात्तेनैव निपुणं तदा ।
शाकद्वीपे भ्रमिं कृत्वा रूपं निर्वर्तितं मम ॥१२॥
प्रीत्या तेषां प्रपंचोऽयं स मया कारितः पुनः ।
तेनेयं कल्पवृक्षात्तु निर्मिता विश्वकर्मणा ॥१३॥
कृत्वा हिमवतः पृष्ठे पुरा सिद्धनिषेविते ।
त्वदर्थं चंद्रभागायां ततस्तेनावतारिता ॥१४॥
भवतस्तारणार्थं हि ततः स्थानमिदं शुभम् ।
रुचिरं सर्वदा सांब सान्निध्यं मेत्र यास्यति ॥१५॥
सान्निध्यं मम पूर्वाह्णे सुतीरे द्रक्ष्यते जनैः ।
कालप्रिये च मध्याह्नेऽपराह्णे चात्र नित्यशः ॥१६॥
पूर्वाह्णे पूजयेद्ब्रह्मा मध्याह्ने चक्रधृत्स्वयम् ।
शंकरश्चापराह्णे तु मां पूजयति सर्वदा ॥१७॥
इत्युक्तोसौ भगवता भास्करेण स यादवः ।
हर्षमाप महाबाहो भास्करोंतर्दधे ततः ॥१८॥

१ प्रापश्यत–इ० पा० ।

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने साम्बकृतादित्यमूर्तिस्थापनं नामैकोनत्रिंशदुत्तरशततमोऽध्यायः ॥ १२९ ॥

# त्रिंशदुत्तरशततमोऽध्यायः

## सप्तमीकल्पे सांबोपाख्याने प्रासादलक्षणवर्णनम्

शतानीक उवाच

कथं सांबेन विप्रेंद्र प्रतिष्ठा कारिता रवेः ।
कस्य वा वचनात्तेन प्रासादः कारितो रवेः ॥ १ ॥

सुमंतुरुवाच

अत्र ते वच्मि राजेंद्र यथा सांबेन धीमता ।
प्रतिष्ठा कारिता भानोः प्रासादश्च महीपते ॥ २ ॥
सुलब्ध्वा[१] प्रतिमां भानोश्चिंतयामास नारदम् ।
स चापि चिंतितश्चागाद्यत्र जांबवतीसुतः ॥ ३ ॥
तमागतमभिप्रेक्ष्य नारदं मुनिसत्तमम् ।
संपूज्य विधिवत्सांबो नारदं वाक्यमब्रवीत् ॥ ४ ॥
प्रासादं कारयेद्यस्तु भास्करस्य नरो द्विज ।
किं फलं तस्य देवर्षे प्रतिष्ठां यश्च कारयेत् ॥ ५ ॥

नारद उवाच

प्रासादं शोभने देशे यस्तु कारयते रवेः ।
स याति नरशार्दूल सूर्यलोकं न संशयः ॥ ६ ॥

सांब उवाच

कथं कुर्यादायतनं कस्मिन्देशे[१] द्विजोत्तम ।
कीदृक्छस्तं चायतनं देवदेवस्य वै द्विज ॥ ७ ॥

नारद उवाच

यत्र प्रभूतं सलिलमागमे च विनाशने ।
देवतायतनं कुर्याद्यशोधर्मविवृद्धये ॥ ८ ॥
इष्टापूर्तेन लभते लोकांस्तांश्च[२] विभूषितान् ।
देवानामालयं कार्यं द्वयं यत्र च दृश्यते ॥ ९ ॥
सलिलाद्यं च आरामः कृतेष्वायतनेषु च ।
स्थानेष्वेतेषु सान्निध्यमुपगच्छंति देवताः ॥१०॥
सरःसु नलिनीच्छन्ननिरस्तरविरश्मिषु ।
हंससंक्षिप्तकह्लारवीथीविमलवारिषु ॥११॥
हंसकारंडवक्रौंचचक्रवाकविराविषु ।
पर्यन्तविमलच्छायाविश्रांतजनचारिषु ॥१२॥
क्रौंचकांचीसुलापाश्च कलहंसकलस्वनाः ।
नद्यस्तोयांशुका यत्र शफरीकृतमेखलाः ॥१३॥
फुल्लद्रुमोत्तमावासाः संगमश्रोणिमंडलाः ।
पुलिनाद्युन्नतोरस्का रसहासाश्च निम्नगाः ॥१४॥
वनोपांतनदीशैलसंस्कारोपान्तभूमिषु ।
रमंते देवता नित्यं पुरेषूद्यानवत्सु च ॥१५॥
भूमयो ब्राह्मणादीनां याः प्रोक्ता वास्तुकर्मणि ।
ता एव तेषां शस्यंते देवतायतनेष्वपि ॥१६॥
चतुःषष्टिपदं कुर्याद्देवतायतनं सदा ।
द्वारं च मध्यमं तस्मिन्समदिक्संप्रशस्यते ॥१७॥
यो विस्तारो भवेत्तस्य द्विगुणा तत्समुन्नतिः ।
उच्छ्रायस्तु तृतीयोथ तेन तुल्या कटिर्भवेत् ॥१८॥
विस्तारार्धो भवेद्गर्भो भित्तयोन्याः समंततः ।
गर्भपादोनविस्तीर्णं द्वारं द्विगुणमुच्छ्रितम् ॥१९॥
उच्छ्रयात्पादविस्तीर्णा शाखा तद्वदुदुंबरी ।
विस्तरात्पादप्रतिमाद्बाहुल्यं शेषयोः स्मृतम् ॥२०॥
नृपंचसप्तनवभिः शाखाभिस्तत्प्रशस्यते ।
अथ शाखाचतुर्भागे प्रतिहारौ निवेशयेत् ॥२१॥
शैलमंगल्यविहगः श्रीवृक्षः स्वस्तिकैर्घटैः ।
मानाष्टमेन भागेन प्रतिमा स्यात्सपिंडिका[१] ॥२२॥
द्विभागा प्रतिमा तत्र तृतीयो भागपिंडिका ।
पूर्वे मेरुर्महाबाहो कैलासश्च तथापरे ॥२३॥
भवंति चापरे वीर विमानच्छदनं तथा ।
समुद्रपद्मगरुडनंदिवर्द्धनकुञ्जराः ॥२४॥
गृहराजो वृषो हंसः सर्वतोभद्रको घटः ।
सिंहो वृषश्चतुष्कोणः षोडशाष्टाश्रयस्तथा ॥२५॥
इत्येते विंशतिः प्रोक्ताः प्रासादा यदुनंदन ।
यथोक्तानुक्रमेणैव लक्षणानि वदामि[२] ते ॥२६॥
नवत्रिंशदुच्छ्रितमेरुर्द्वादशभौमो विविधकुहरश्च।
द्वारैर्युतश्चतुर्भिर्द्वात्रिंशद्धस्तविस्तीर्णः ॥२७॥
त्रिंशद्धस्तायामो दशभौमः सप्त मंदरः ।
शिखरयुतः कैलासोऽपि शिखरवानष्टाविंशोमश्च॥२८॥
जालगवाक्षैर्युक्तो विमानसंज्ञस्त्रिसप्तकायामः ।
नन्दन इति वै भौमो द्वात्रिंशत्षोडशांगयुतः ॥२९॥

---

१ कस्मिन्देशे द्विजोत्तमः-इ० पा० । २ लोकांस्तांस्तान्स्वभाकितः-इ० पा० ।

१ मिथुनैर्द्वारमारभ्ये भागेन स्यात्सुपिण्डिका-इ० पा० । २ निबोध मे-इ० पा० ।

वृत्तः समुद्रनामा पद्माकृतिरयं चाष्टौ ।
श्रृंगेणैकेन भवेदेकेन च भूमिका तस्य ॥३०॥
गरुडाकृतिश्च गरुडो नंदी वै षष्टिविस्तीर्णः ।
कायश्च सप्तभौमो विभूषितांऽगैश्च सप्तविंशतिभिः॥३१॥
कुंजर इति गजपृष्ठः षोडशहस्तोच्छ्रितो मध्ये ।
गृहराजः षोडशकस्त्रिचक्रशाला भवेद्वलभी ॥३२॥
वृष एव भूमिश्रृंगो द्वादशहस्तः समुन्नतो वृत्तः ।
हंसो हंसाकारो घटोऽष्टसहस्रकलशरूपः ॥३३॥
द्वारैर्युतश्चतुर्भिर्बहुशिखरो भवति सर्वतोभद्रः ।
बहुरुचिरचन्द्रशालः षड्विंशद्भागभूमिश्च ॥३४॥
सिंहः सिंहाकारो द्वादशकोणोऽष्टहस्तश्च ॥३५॥
सहस्त्रित्रितयं चैव कथितं विश्वकर्मणा ।
प्राहुः स्थापयतश्चात्र मतमेकं विपश्चितः ॥३६॥
कपोतपालिनीयुक्तमतो गच्छति तुल्यताम् ॥३७॥

सांब उवाच

य एते कथिता विप्र प्रासादा विंशतिस्त्वया ।
तेषां सूर्यस्य कः कार्यः प्रासादो भास्करस्य तु ॥३८॥
स्थानानि यानि चोक्तानि प्रासादस्य द्विजोत्तम ।
तेषां त्वयोक्तं हि पुरं व्ययवद्भिर्नरैर्युतम् ॥३९॥
तस्मिन्प्रदेशे वै कार्यं भानोर्मंदिरमुत्तमम् ।
दिशां भागे च कतमे ब्रूहि शेषं द्विजोत्तम ॥४०॥

नारद उवाच

पुरमध्यं समाश्रित्य कुर्यादायतनं रवेः ।
दिशां भागोऽथ वा पूर्वे पूर्वद्वारसमीपतः ॥४१॥
भूमिं परीक्ष्य पूर्वं तु कुर्यादायतनं ततः ।
इष्टगंधरसोपेता निम्ना भूमिः प्रशस्यते ॥४२॥
शर्करातुषकेशास्थिक्षारांगारविवर्जिता ।
मेघदुंदुभिनिर्घोषा सर्वबीजप्ररोहिणी ॥४३॥
शुक्ला रक्ता तथा पीता कृष्णा च कथिता क्षितिः।
द्विजराजन्यवैश्यानां शूद्राणां च यथाक्रमम् ॥४४॥
परीक्षितायां तस्यां तु मध्ये तस्याः प्रमाणतः ।
उपलिप्य चतुर्हस्तं चतुरस्त्रं समंततः ॥४५॥

हस्तमात्रमधः कृत्वा मध्ये तस्या दशांगुलम् ।
गर्तमुत्कीर्य तेनैव पांसुना प्रतिपूरयेत् ॥४६॥
समे समगुणा ज्ञेया हीने हीनगुणा भवेत् ।
वर्धमाने तु वै पांसौ भवेद्वृद्धिकरी क्षितिः ॥४७॥
नित्यं संमुखमर्कस्य कदाचित्पश्चिमामुखम् ।
स्थापनीयं गृहं सम्यक्प्राङ्मुखस्थानकल्पनात् ॥४८॥
भवनाद्दक्षिणे पार्श्वे रवेः स्नानगृहं भवेत् ।
अग्निहोत्र गृहं कार्यं रवेरुत्तरतः शुभम् ।
उदङ्मुखं भवेच्छंभोर्मातॄणां गृहमेव च ॥४९॥
ब्रह्मा पश्चिमतः स्थाप्यो विष्णुरुत्तरतस्तथा ।
निंबस्तु दक्षिणे पार्श्वे वामे राज्ञी प्रकीर्तिता ॥५०॥
पिंगलो पक्षिणे भानोर्वामतो दंडनायकः ।
श्रीमहाश्वेतयोः स्थानं पुरतस्त्वंशुमालिनः ॥५१॥
ततः स्थाप्याश्विनोः स्थानं पूर्वदेवगृहाद्बहिः ।
द्वितीयायां तु कक्षायां राज्ञास्त्रौषौव्यवस्थितौ ॥५२॥
तृतीयायां तु कक्षायां स्थितौ कल्माषपक्षिणौ ।
जंडकांभचरौ स्थाप्यौ दक्षिणां दिशमाश्रितौ ॥५३॥
उदीच्यां स्थापनीयस्तु कुबेरो लोकपूजितः ।
उत्तरेण ततस्तस्य रेवतः सविनायकः ॥५४॥
यत्र वा विद्यते स्थानं दिक्षु सर्वा गुहादयः ।
द्वे मण्डलेऽर्घ्यदानार्थं कार्ये सव्यापसव्यतः ॥५५॥
दद्यादुदयवेलायामर्घं सूर्याय दक्षिणे ।
उत्तरे मण्डले दद्यादर्घ्यमस्तमने रवेः ॥५६॥
चक्राकृतां तथान्यस्मिन्देवस्य प्रतिमां रवेः ।
स्थापयेद्विधिवद्वीर चतुर्भिः कलशैः शुभैः ॥५७॥
नानातूर्यनिनादैश्च शंखशब्दैश्च पुष्कलैः ।
तृतीये मण्डले ह्येवं पूजनीयो दिवाकरः ॥५८॥
चतुरस्त्रं चतुःश्रृंगं व्योम देवगृहाग्रतः ।
प्रतिमायास्तु सूत्रेण कार्यं मध्येऽस्य मंडलम् ॥५९॥
दिंडी स्थाप्यःपुरस्तस्मादादित्याभिमुखःस्थितः।
यदेतत्कथितं व्योम सर्वदेवमयं मया ॥६०॥
मध्याह्ने तस्य दातव्यमर्घ्यमत्र यदूत्तम ।
अथ वा मंडलं चान्यत्तृतीयं चक्रसंमितम् ॥६१॥

१ सिंहाक्रान्तः–इ० पा० । २ महत्–इ० पा० । ३ त्रिधा–इ० पा० । ४ हस्तमात्रम्–इ० पा० ।

१ परिपूरयेत्–इ० पा० । २ तथा–इ० पा० । ३ निम्बं–श्रीपर्णवृक्षश्च वामे राज्ञो प्रकीर्तिता–इ० पा० । ४ पार्श्वे–इ०पा० । ५ जानुकामाचरौ–इ० पा० । ६ सह–इ०पा० । ७ गीतशब्दैः–इ० पा० । ८ अत्र–इ० पा० । ९ चक्रसंज्ञितम्–इ० पा० ।

स्थापयित्वा तु देवेशं दातव्योऽर्घः सुपण्डितैः ।
देवस्य पुरतः कार्यं व्योमस्थानं समीपतः ।
पुस्तकवाचनस्थानमथ वा यत्र रोचते ॥६२॥
एष स्थानविधिः प्रोक्तो देवतानां यथाक्रमम् ।
गृहराज्ञोथ रुद्रस्तु द्वावेतौ भास्करप्रियौ ॥६३॥

इति श्रीभविष्ये महापुराणे शतार्द्धसाहस्र्यां संहितायां ब्राह्मे पर्वणि सप्तमीकल्पे सांबोपाख्याने प्रासादलक्षणवर्णनं नाम त्रिंशदुत्तरशततमोऽध्यायः ॥ १३० ॥

---

## एकत्रिंशदुत्तरशततमोऽध्यायः

### सूर्यप्रतिमानिर्माणविधौ दारुपरीक्षाविधिवर्णनम्

नारद उवाच

अथ ते संप्रवक्ष्यामि प्रतिमाविधिविस्तरम् ।
सर्वेषामेव देवानामादित्यस्य विशेषतः ॥ १ ॥
अर्चा सप्तविधा प्रोक्ता[1] भक्तानां शुभवृद्धये ।
कांचनी राजती ताम्री पार्थिवी शैलजा स्मृता ॥ २ ॥
वार्क्षी चालेख्यका चेति मूर्तिस्थानानि सप्त वै ।
वार्क्षीविधानं ते वीर वर्णयिष्याम्यशेषतः ॥ ३ ॥
कर्त्रनुकूले दिवसे संवत्सरविशोधिते ।
शुभैर्निमित्तैः शकुनैः प्रस्थानैश्च वनं विशेत् ॥ ४ ॥
क्षीरिणो वर्जिताः सर्वे दुर्बलास्ते स्वभावतः ।
चतुष्पथेषु न ग्राह्या ये च पुत्रकवृक्षकाः[2] ॥ ५ ॥
देवतायतनस्था ये तथा वल्मीकसंभवाः ।
उत्कीर्णा देवता येषु चैत्यवृक्षाश्च ये स्मृताः ॥ ६ ॥
श्मशानभूमिजा ये च पक्षिणां निलयाश्च ये ।
सकोटराश्च ये वृक्षाः शुष्काग्रा ये च पादपाः ॥ ७ ॥
शस्त्रेण निहता ये च कुञ्जरास्तथा कृताः ।
सामाद्याः सरुजोऽधश्च व्याधिनश्च तथैव च ॥ ८ ॥
अकाले पुष्पिता ये च काले ते च विवर्जिताः ।
शीर्णपर्णाश्च तरवो रक्षोध्वांक्षनिषेविताः ।
एकशाखातिशाखाश्च त्रिशाखाश्च तथाधमाः ॥ ९ ॥
मधूको देवदारुश्च वृक्षराजश्च चन्दनः ।
बिल्वश्चाम्रातकश्चैव खदिरोथाञ्जनस्तथा ॥१०॥
निम्बः श्रीपर्णवृक्षश्च पनसः सरलोऽर्जुनः ।
रक्तचन्दनपर्यन्ताः श्रेष्ठाः स्युः प्रतिमाद्रुमाः ॥११॥
वर्णानामानुपूर्व्येण द्वौ द्वौ वृक्षौ प्रकीर्तितौ ।
निंवाद्याः सर्ववर्णानां वृक्षाःसाधारणाः स्मृताः ॥१२॥
कथ्यमानान्विशेषेण शृणु वीर तथापरान् ।
सुरदारुः शमी चैव मधूकश्चन्दनस्तथा ।
एते वै तरवस्तात ब्राह्मणानां शुभाः स्मृताः ॥१३॥
क्षत्रस्य च तथारिष्टः खदिरस्तिंदुकस्तथा ।
अश्वत्थश्च तथा सांब द्रुमः करकतः शुभः ॥१४॥
वैश्यानां तद्वदेव स्युः खदिरश्चंदनस्तथा ।
पुण्याश्च तरवश्चैते शुभदास्तु तथैव च ॥१५॥
केसरः सर्जकश्चाम्रः शालवृक्षस्तथेतरः ।
एते वै तरवः पुण्याः शूद्राणां शुभदायकाः ॥१६॥
लिङ्गं च प्रतिमां चैवमवस्थाप्य यथाविधि ।
वृक्षं चाभिमतं गत्वा पूजयेद्बलिपुष्पकैः ॥१७॥
शुचौ देशे विविक्ते च केशांगारविवर्जिते ।
प्रागुदक्सूचके देशे लोककष्टविवर्जिते ॥१८॥
विस्तीर्णस्कन्धविटपः पत्रवानृजुवृद्धिगः ।
आतंकहीनोविवशः सत्त्वकपर्णः शुभस्तथा ॥१९॥
स्वेनैव पतिता ये च हस्तिभिः पातितास्तथा ।
शुष्काश्च वह्निदग्धाश्च पक्षिभिश्चापि वर्जिताः ॥२०॥
तरवो वर्जनीयाश्च ग्रहीतव्याः शुभा द्रुमाः ।
स्निग्धरूपाः सपर्णाश्च सपुष्पाः सफलास्तथा ॥२१॥
तेषां तु ग्रहणं चाष्टमासेषु कार्त्तिकादिषु ।
भूत्वा शुभदिने चैव सोपवासोधिवासयेत् ॥२२॥
समन्तादुपलिप्याथ तस्याधस्ताद्वसुन्धराम् ।
गायत्र्या परिपूतेन परितः प्रोक्ष्य वारिणा ॥२३॥

---

१ प्रतिमा सप्तधा प्रोक्ता—इ० पा० । २ पुत्रकवृक्षकाःनवविरूढाः—बालवृक्षा इत्यर्थः ।

शुक्ले च परिधूते च परिधाय च[1] वाससी ।
पूजयेद्गन्धमाल्यैश्च सधूपबलिकर्मभिः ॥२४॥

ततः कुशैः परिस्तीर्णे हुत्वाग्नौ तस्य चांतिके ।
देवदारुसमिद्भिश्च मन्त्रेणानेन तत्त्ववित् ॥२५॥

ॐ भूर्भुवः सुवरिति ततो वृक्षं च पूजयेत् ।
ॐ प्रजापतये सत्यसदाय नित्यं
श्रेष्ठांतरात्मन्त्सचराचरात्मन् ।
सान्निध्यमस्मिन्कुरु देव वृक्षे
सूर्यावृतं मण्डलमाविशेश्च नमः ॥२६॥

नारद उवाच

एवं संपूजयित्वा तु वाक्यैस्तं परिसांत्वयन् ।
वृक्षलोकस्य शांत्यर्थं गच्छ देवालयं शुभम् ॥२७॥

देव त्वं स्थास्यसे तत्र च्छेददाहविवर्जितः ।
काले धूपप्रदानेन सपुष्पैर्बलिकर्मभिः ॥२८॥

लोकास्त्वां पूजयिष्यंति ततो यास्यसि निर्वृतिम् ।
वृक्षमूले कुठारं तु धूममाल्यैः प्रपूज्य च ॥२९॥

पूर्वतस्तु शिरः कृत्वा स्थापनीयः प्रयत्नतः ।
परमान्नमोदकौदनपलपूपिकादिभिर्भक्ष्यैः ॥३०॥

मद्यैः कुसुमैर्धूपैर्गन्धैश्च तरुं समभ्यर्च्य ।
सुरपितृपिशाचराक्षसभुजंगसुरगणविनायकाद्यानाम् ३१

कृत्वा पूजां रात्रौ वृक्षं संस्पृश्य च ब्रूयात् ॥३२॥

अर्चासु देवदेव त्वं देवैश्च परिकल्पितः ।
नमस्ते वृक्ष पूजेयं विधिवत्परिगृह्यताम् ॥३३॥

यानीह भूतानि वसंति तानि
बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।
अन्यत्र वासं परिकल्पयंतु
क्षमन्तु ते चाद्य नमोऽस्तु तेभ्यः ॥३४॥

[1] चापरिमुक्ते च--इ० पा० ।

प्रभातायां तु शर्वर्यां पुनः संपूज्य तं नगम् ।
ब्राह्मणेभ्यस्ततो दत्त्वा भोजकेभ्यश्च दक्षिणाम् ।
छिन्द्याद्वनस्पतींस्तज्ज्ञैस्तैः कृतस्वस्तिवाचनैः ॥३५॥

पूर्वस्यां दिशि पातोऽस्य
ऐशान्यां चापि यो भवेत् ।
अथ वा उत्तरस्यां तु तथा
छिन्द्यात्तु[1] नान्यथा ॥३६॥

ऐन्द्यैशान्योरुदीच्यां च पातस्तिसृषु शस्यते ।
नैर्ऋत्याग्नेययाम्यासु दिक्षु पातो न शोभनः ।
वायव्यां चैव वारुण्यां तस्य पातस्तु मध्यमः ॥३७॥

यस्य बाह्यस्थिता शाखा दिक्षु नष्टा चतसृषु ।
वास्तुपूर्वं ततः स्थित्वा ततः पश्चादवस्थिता ॥३८॥

अविलग्नमशब्दं तु पतनं तु प्रशस्यते ।
उत्पद्येद्वृद्धिदलं यस्य द्रावश्च मधुरो भवेत् ॥३९॥

सर्पिस्तैलं क्षरेद्यस्य पादपं तं विवर्जयेत् ।
शुभदं यदुशार्दूल शृणु त्वं कथये शुचि ॥४०॥

वृक्षं प्रभाते सलिलैर्निषिक्तं
पूर्वोत्तरस्यां दिशि संनिकृत्य ।
मध्वाज्यदिग्धेन कुठारकेण
प्रदक्षिणं शोषमभिप्रहण्यात् ॥४१॥

पूर्वोत्तरेऽप्युत्तरदिग्विभागे
पातो यदा वृद्धिकरस्तदा स्यात् ।
आग्नेयकोणक्रमशोऽग्निदाह
उग्रोग्ररोगाः सुधनक्षयश्च ॥४२॥

गारुडे दिशि पाषाणं कपोतो गृहगोधिका ।
सितवर्णं जलं ज्ञेयमंगुष्ठाभं भवेत्कृमिः ।
दोषैरेतैर्विनिर्मुक्तं मुदा कालं समुद्धरेत् ॥४३॥

[1] तुंगं यथा तथा--इ० पा० ।

इति श्रीभविष्ये महापुराणे ब्राह्मे पर्वणि सप्तमीकल्पे दारुपरीक्षावर्णनं नामैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥

## तृतीयोऽध्यायः

### क्षुद्रारामप्रतिष्ठाविधिवर्णनम्

सूत उवाच ।

क्षुद्रारामप्रतिष्ठां च वक्ष्ये वै द्विजसत्तमाः ।
अमंडले शुभे स्थाने द्विहस्तेऽप्यथ स्थंडिले ॥ १ ॥
स्थापयेत्कलशं तत्र विष्णुं सोमं समर्चयेत् ।
आचार्यमात्रं वरयेत्त्रिशासूत्रैः प्रवेष्टयेत् ॥ २ ॥
वृक्षान्माल्यैरलंकृत्य भूषयेद्भूषणादिना ।
दोहदं च ततो दद्यात्स्थापयेच्छतधारया ॥ ३ ॥
भोजयेत्पश्च विप्रान्हि पुरतस्तं विशेषयेत् ।
कर्णवेधं ततः कृत्वा उत्सृजेद्वाक्यपूर्वकम् ॥ ४ ॥
दद्यद्यूपं मध्यदेशे रोपयेत्कदलीं ततः ।
रंभाश्च रोपयेद्दिक्षु स्थालीपाकविधानतः ॥ ५ ॥
अष्टावष्टौ च जुहुयादन्येषां च घृतेन तु ।
एकैकामाहुतिं दद्यात्स्विष्टकृत्तदनंतरम् ॥ ६ ॥
दक्षिणां च ततो दद्यात्पूर्णां दत्त्वाहुतिं व्रजेत् ॥ ७ ॥
एकादिवृक्षं वृक्षाणां विधिं वक्ष्ये द्विजोत्तमाः ।
समुत्सृज्य ततो यूपं कर्मणा सह धर्मवित् ॥ ८ ॥
वृक्षमूले यजेद्धर्मं पृथिवीं च विशं तथा ।
दिगीशांश्च तथा यक्षानाचार्यं तोषयेत्ततः ॥ ९ ॥
धेनुं च दक्षिणां दद्याद्दोहदं वृक्षपूजनम् ।
कृत्वा सम्यग्विधानेन सवित्रेऽर्घ्यं निवेदयेत् ॥ १० ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः

### अश्वत्थप्रतिष्ठापुष्करिणीप्रतिष्ठाजलाशयप्रतिष्ठाविधिवर्णनम्

सूत उवाच

अथाश्वत्थप्रतिष्ठायां मले बाहुप्रमाणके ।
स्थंडिलं कारयेत्तत्र चंदनेनोक्षितं तथा ॥ १ ॥
पद्मं प्रकल्पयेत्तत्र सामान्यार्घ्यं विधाय च ।
पूर्वेद्यू रात्रिसमये तद्विष्णोरिति वै ऋचा ॥ २ ॥
स्थापयेद्वारिणा पूर्णं कया नेति च गन्धकम् ।
गंधद्वारेति तैलेन श्रीश्चतेति च चन्दनम् ॥ ३ ॥
दद्याद्दूर्वाक्षतं कल्पे ब्राह्मणत्रयभोजनम् ।
कारयेत्सितसूत्रैश्च वेष्टयेच्चन्दनोक्षितैः ॥ ४ ॥
कुंभे विनायकं पूज्य ब्रह्माणं च परे घटे ।
स्वदिक्षु दिक्पतींश्चैव वृक्षमूले नवग्रहान् ॥ ५ ॥
मंडले शिवमभ्यर्च्य पीठपूजापुरःसरम् ।
अथ ध्यानं प्रवक्ष्यामि श्वेतं वृषभमेव च ॥ ६ ॥
द्विभुजं शूलहस्तं च सर्वाभरणसंयुतम् ।
आरोपयेत्स्वसामर्थ्याद्भूतशुद्धिं समाचरेत् ॥ ७ ॥
ततोऽर्घ्यपात्रं कृत्वा तु पीठपूजां समाचरेत् ।
गणेशं गुरुपादं च जयं भद्रं समाहितः ॥ ८ ॥
मध्ये आधारशक्तिं च कूर्मानंतौ सपद्मकौ ।
चन्द्रसूर्याग्निकादीनां मंडलानि क्रमाद्यजेत् ॥ ९ ॥
पुनः पात्रांतरस्थं च गृहीत्वा कुसुमं बुधः ।
पाणिकच्छपिकां कृत्वा ध्यायेद्वै वरुणं तथा ॥ १० ॥
पूर्ववच्च विधानेन दद्यात्पात्रादिकं त्रयम् ।
मधुपर्कं चासनं च पृच्छेच्च स्वागतं पुनः ॥ ११ ॥
मुद्रां प्रदर्श्य विधिवदंगपूजां समाचरेत् ।
पूर्वादिपत्रे इन्द्रादीन्ब्रह्माणं मध्यतो यजेत् ॥ १२ ॥
अनंतं पुरतश्चैव तेषामस्त्राणि तद्बहिः ।
मध्ये तोयाधिपं रुद्रं शांतं चैव प्रशांतकम् ॥ १३ ॥
भूस्तत्त्वं भुवस्तत्त्वं च स्वस्तत्त्वादि च तत्त्वकम् ।
कामं धर्ममधर्मं च दिक्षु नारायणं शिवम् ॥ १४ ॥
नैर्ऋते च यजेद्दुर्गां पार्श्वयोश्च शतक्रतुम् ।
विनायकं च विष्णुं च गङ्गां पृथिविपृष्ठिकम् ॥ १५ ॥
षोडशेनोपचारेण पूजयेच्च विशेषतः ।
मंडलस्योत्तरे भागे नागरूपमनंतकम् ॥ १६ ॥
पंचकृष्णालकैः कुर्याद्विहस्तपर्वप्रमाणकम् ।
आरोपयेच्चाक्षताद्यैः श्वेतचन्दनपुष्पकैः ॥ १७ ॥
पूजयेत्परया भक्त्या अग्निकार्यमथाचरेत् ।
वरुणं जुहुयात्पूर्वं मधुना पायसेन वा ॥ १८ ॥

तिलाक्षतैर्वा आज्यैर्वा त्रिमध्वक्तैरथापि वा ।
अष्टोत्तरशतं कुर्याद्दिगीशानां घृतेन तु ॥१९॥
एकैकामाहुतिं दद्यात्पुष्पैस्तिलघृतेन च ।
नारायणं शिवं दुर्गां गणेशं च ग्रहान्निशि ॥२०॥
अष्टावष्टौ च जुहुयाद्धृतैरेकाहुतिर्भवेत् ।
ब्रह्मयुध्वानमितिमंत्रेण ब्रह्माणं पायसेन तु ॥२१॥
एकाहुतिं ततो दद्यादापोहिष्ठेति वा त्रिभिः ।
ततो वरुणमुद्दिश्य दद्यादाज्याहुतित्रयम् ॥२२॥
इमं वरुण इति वा तद्वगोमा ऋचा पुनः ।
वरुणस्योत्तंभनमसीति येनापावक एव च ॥२३॥
वातस्ययमिति पुनः पञ्चवर्णं यथाक्रमात् ।
ततो वरुणमुद्दिश्य घृतेन च गुडैः सह ॥२४॥
ततः स्विष्टकृते दद्याद्बलिं दद्यादनुक्रमात् ।
मध्वाज्यपायसं दद्याद्वरुणाय विशेषतः ॥२५॥
यवक्षीरं दिगीशेभ्यो ह्यन्येभ्यः पायसेन तु ।
नागाय पिष्टकं दद्याल्लाजाहोमाष्टकं पुनः ॥२६॥
अनंतस्योत्तरे तीरे पद्मपत्रं परिस्तरेत् ।
अष्टाष्टापदमानेन वरुणं राजतेन तु ॥२७॥
कुर्यात्पूर्वद्वयेनापि वाणरत्तिसुवर्णकैः ।
कुर्यात्पुष्करिणीं तत्र पूर्वार्धे चतुरस्रके ॥२८॥
वरुणं विन्यसेत्तत्र तथा पुष्करिणीमपि ।
विधिवद्वाक्यपूर्वेण उत्सृजेच्च जलेशयम् ॥२९॥
ॐ अद्येत्यादि विष्णुरूपाय वरुणाय श्रुति स्मृत्याद्युक्तवेदव्यासप्रणीताग्निष्टोमफल प्राप्तये पुष्कारिणीप्रतिष्ठाकर्मणि इमां पुष्करिणीं सुवर्णराजतां स्वगृह्योदितां सालंकारां सुपूजितामसुकगोत्रःऽयमुकदेवशर्मा तुभ्यमहं संप्रददे ।

इत्युत्सर्गवाक्यम् ।

ॐ अद्येत्यादि ब्राह्मणमुख्येभ्यः ममाग्निष्टोमाद्यनेकफलप्राप्तये इमं जलाशयं वरुणदैवतं सुपूजितं चतुर्मुखसहितं चतुःसत्त्वावच्छिन्नस्नानपानाद्युपभोगाय अमुकसगोत्रः ऽयमुकदेवशर्माहमुत्सृजे ।

ततो नौकां समादाय मध्यात्किंचित्तथोत्तरे ।
जलाशयस्य मध्यं तु ऋत्विग्घोमं चरेत्ततः ॥३०॥
पूर्वावस्थायिनीं यष्टिं समारोप्य विधानतः ।
ततो वरुण सूक्तेन वरुणं राजतोद्भवम् ।
पुष्करिण्या समं तेन नागयष्ट्यंतरे क्षिपेत् ॥३१॥
तत्रैवानंतनागं च मंत्रमेतदुदीरयेत् ।
पुंडरीकदलाभास शुभरक्तांतलोचन ।
फणासहस्रसंयुक्त सुप्रतिष्ठ नमोऽस्तु ते ॥३२॥
दक्षिणां च ततो दद्यात्ततः पूर्णां विधाय च ।
मोचयेन्मकरान्ग्राहान्मीनकूर्माञ्जलेचरान् ॥३३॥
पद्मोत्पलं च शैवालं मंत्रमेव प्रयत्नतः ।
पुष्करिण्यां च त्रिः कुर्यात्खातं सर्वप्रदक्षिणाम् ॥३४॥
आदित्याध्यायकं जप्त्वा क्षिपेल्लाजकपर्दकान् ।
पातयेत्क्षीरधारां च सहस्रेण शतेन च ॥३५॥
सूत्रेण वेष्टयेत्प्राज्ञो रक्तेन च चतुस्क्रमात् ।
पथि संतोषयेद्दीनान्संतोष्य च गृहं व्रजेत् ॥३६॥

॥ इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

### नलिनीवापीह्रदप्रतिष्ठाविधिवर्णनम्

सूत उवाच

नलिन्याश्च तथा बाप्या ह्रदस्य द्विजसत्तमा ।
विधिं वक्ष्ये सहाङ्गेन विधानं शृणुत द्विजाः ॥ १ ॥
स्वर्णपादेन मानेन पूर्वेद्युरधिवासयेत् ।
आपोहिष्ठेति मन्त्रेण तथा अब्जैः शतैरपि ॥ २ ॥
स्वमण्डले शुभे स्थाने विशेत्पूर्वमुखेन तु ।
गणेशं वरुणं चैव घटे संपूजयेच्छिवम् ॥ ३ ॥
वागीशं च तथा विष्णुं सूर्यं कुंभे समर्चयेत् ।
पायसेनाहुतिं दद्याद्वरुणाय घृतेन च ॥ ४ ॥
एकैकामाहुतिं दद्यादन्येषां च स्रुवेण च ।
बलिदानं पायसेन उत्सृजेत्तदनंतरम् ॥ ५ ॥
यूपं निवेशयेत्पश्चाद्दद्याद्धेनुं च दक्षिणाम् ।
पूर्णां दद्यात्सवित्रेऽर्घ्यं दत्त्वा तु स्वगृहं व्रजेत् ॥ ६ ॥

आरामस्य विधिं वक्ष्ये प्रतिष्ठाविधिविस्तरम् ।
हीनारामस्य च तथा एक वृक्षस्य च द्विजाः ॥ ७ ॥

अरण्यमध्ये पाश्चात्त्ये उत्तरे वा विशेषतः ।
मंडपं वर्तुलं कुर्यादर्ध्यहस्तप्रमाणकम् ॥ ८ ॥

तद्दक्षिणे भवेत्कुंडं चतुरस्रं समं शुभम् ।
चतुर्मुखं च कर्तव्यं तोरणाद्यैरलंकृतम् ॥ ९ ॥

मंदरादिकमावाह्य ततः संपूजयेत्क्रमात् ।
विष्वक्सेनं च तत्रैव पूजयेद्गन्धचन्दनैः ॥१०॥

भृंगुं कर्णसमारूढं सर्वभूषणभूषितम् ।
विष्वक्सेनस्य मंत्रोयं पूजायां चैव सर्वतः ॥११॥

द्वारपालं च संपूर्ण गौर्यादीन्कलशेषु च ।
स्वासु दिक्षु दिगीशानां बलिपुष्पाक्षतादिना ॥१२॥

नैर्ऋत्यवरुणयोर्मध्ये अनंतं प्रतिपूजयेत् ।
इन्द्रेशानयोश्च मध्ये ब्रह्माणं च प्रकल्पयेत् ॥१३॥

वेदिपार्श्वे ततो गत्वा वेदिमावाह्य पूजयेत् ।
आसनं कल्पयित्वा तु सामान्यार्घ्यं विधाय च ॥१४॥

ऐशाने कलशे विद्युद्ब्रह्माणं च तथा ग्रहान् ।
स्वैःस्वैर्मंत्रैर्गंधपुष्पैर्नैवेद्यैश्च पृथग्विधैः ॥१५॥

मंडलेशं वासुदेवं सासनं च बृहस्पतिम् ।
पूजयेत्परया भक्त्या पायसान्नं बलिं हरेत् ॥१६॥

द्विभुजं वासुदेवं च शंखचक्रधरं विभुम् ।
पद्मासनगतं ध्यायेत्पीतवस्त्रं सुशोभनम् ॥१७॥

नीलोत्पलदलाभासं हरिचंदनचर्चितम् ।
देवर्षिसिद्धसहितं कलत्रद्वय संयुतम् ॥१८॥

ध्यात्वा आरोपयेद्देवं बालादीनथ नायकान् ।
विमलाद्या नायिकाश्च दिगीशांश्च यथाविधि ॥१९॥

षोडशोच्चैः पृथग्रूपैः प्रतिपुष्पांजलिक्रमात् ।
परितः पूजयेद्विष्णुं शिवं दुर्गां सरस्वतीम् ॥२०॥

शुद्धस्फटिकसंकाशं ध्यायेत्सोमं चतुर्मुखम् ।
अश्वारूढं दिव्यं रूपं पद्माक्षं घृतपुष्पकम् ॥२१॥

वरदं देवगंधर्वैः सेवितं मुनिभिः स्तुतम् ।
श्वेतं वनस्पतिं ध्यायेद्द्विभुजं पीतवाससम् ॥२२॥

स्वरथस्थं महाबाहुं शंखांकुशसखेटकम् ।
विद्यां च वामतो ध्यायेत्तद्वमन्त्रेण च स्थापयेत् ॥२३॥

दशस्वरान्वितं तोयं स्वभावं तमसान्वितम् ।
मंत्रोऽयं देवदेवस्य पूजायां विनियोजयेत् ॥२४॥

नीलं जयं भृगिणं च परितश्च यथाक्रमात् ।
ततःकुशकंडिकांकृत्वा स्थालीपाकं विधानतः ॥२५॥

अष्टोत्तरशतं चैव सोमाय द्वादशाहुतीः ।
वानस्पतेस्तथाष्टौ च आज्येन्येषां विधीयताम् ॥२६॥

एकैकामाहुतिं दद्यात्सप्तजिह्वामनंतरम् ।
वस्तोष्पतय इति मंत्रेण स्थालीपाकद्वयं नयेत् ॥२७॥

वनस्पतिं समुद्दिश्य ततोयमीरयेदृचम् ।
वृक्षादीन्स्थापयेत्पूर्वं गायत्र्या प्रथमं बुधः ॥२८॥

अञ्जैरग्रं कांस्यवस्त्रं रत्नं दिक्षु यथाक्रमम् ।
व्रीहयश्चेति मंत्रेण तथा च सरितश्च मे ॥२९॥

मित्रत्रयश्चेति तथा पूषा च म ऋचा तथा ।
संस्थाप्य व्रीहीन्संवाप्य तत्रैव विधिपूर्वकम् ॥३०॥

क्षिपेद्गङ्गाजलं तोये सर्वौषध्युदकेन च ।
संस्थाप्य जयमानं च सुरास्त्वामिति मन्त्रकैः ॥३१॥

आचार्यमात्मने तत्र संस्थितं द्विजपुंगवैः ।
समाप्य नित्यविधिनाचार्यायाथ च दक्षिणाम् ॥३२॥

धेनुं च लोहपात्रं च दत्वा इष्टां च दक्षिणाम् ।
ब्राह्मणेभ्यो यथाशक्ति दद्यात्पूर्णां गृहं व्रजेत् ॥३३॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे पंचमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

### क्षुद्रारामवृक्षप्रतिष्ठाविधिवर्णनम्

सूत उवाच ।

क्षुद्रारामप्रतिष्ठां च वक्ष्ये च द्विजसत्तम ।
अमंडले शुभे स्थाने द्विहस्तमयस्थंडिले ॥ १ ॥
स्थापयेत्कलशं तत्र सोमं विष्णुं समर्चयेत् ।
आचार्यमात्रं वरयेत्त्रिशासूत्रैः प्रवेष्टयेत् ॥ २ ॥
वृक्षान्माल्यैरलंकृत्य भूषयेद्भूषणादिना ।
दोहदं च ततो दद्यात्स्थापयेच्छितधारया ॥ ३ ॥
भोजयेत्पंच विप्रांश्च पुरतोंऽते विशेषतः ।
कर्णवेधं ततः कृत्वा उत्सृजेद्वाक्यपूर्वकम् ॥ ४ ॥
दद्याद्यूपं मध्यदेशे रोपयेत्कदलीं ततः ।
रंभां च रोपयेद्दिक्षु स्थालीपाकविधानतः ॥ ५ ॥
अष्टावष्टौ च जुहुयादन्येषां च घृतेन तु ।
एकैकामाहुतिं दद्यात्स्विष्टकृत्तदनंतरम् ॥ ६ ॥
दक्षिणां च ततो दद्यात्पूर्णां दद्याद्गृहं व्रजेत् ॥ ७ ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### एकादिवृक्षप्रतिष्ठाविधिवर्णनम्

सूत उवाच

एकादिवरवृक्षाणां विधिं वक्ष्ये द्विजोत्तमाः ।
वृक्षस्य पश्चिमे भागे स्थापयेत्कलशं ततः ॥ १ ॥
वृक्षं संस्थापयेत्पूर्वं सूत्रेण परिवेष्टयेत् ।
ब्रह्माणं कलशेभ्यश्च सोमं विष्णुं वनस्पतिम् ॥ २ ॥
ततस्तिलयवैर्होमानष्टाष्टौ विधिवच्चरेत् ।
समुत्सृज्य ततो यूपं कदल्या सह धर्मवित् ॥ ३ ॥
वृक्षमूले यजेद्धर्मं पृथिवीं च विशं तथा ।
दिगीशांश्च तथा-यक्षान्नाचार्यं तोषयेत्ततः ॥ ४ ॥
धेनुं च दक्षिणां दद्याद्दोहदं वृक्षपूजनम् ।
कृत्वा सम्यग्विधानेन सवित्रेऽर्घ्यं निवेदयेत् ॥ ५ ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### पुनरश्वत्थप्रतिष्ठाविशेषविधिवर्णनम्

सूत उवाच

अथाश्वत्थप्रतिष्ठायां मूले बाहुप्रमाणकम् ।
स्थंडिलं कारयेत्तत्र चंदनेनाङ्कितं यथा ॥ १ ॥
पद्मं प्रकल्पयेत्तत्र सामान्यार्घ्यं विधाय च ।
पूर्वेद्यू रात्रिसमये तद्विष्णोरिति वै ऋचा ॥ २ ॥
स्थापयेद्द्वारिणा पूर्णं कया नेति च गंधकम् ।
गंधद्वारेति तैलेन श्रीश्च तेति च चंदनम् ॥ ३ ॥
दद्याद्दूर्वाक्षतं कल्ये ब्राह्मणत्रयभोजनम् ।
कारयेत्सितसूत्रैश्च वेष्टयेच्चंदनस्य च ॥ ४ ॥
कुम्भे विनायकं पूज्य ब्रह्माणं च परे घटे ।
स्वदिक्षु दिक्पतींश्चापि वृक्षमूले नवग्रहान् ॥ ५ ॥
मंडले शिवमभ्यर्च्य पीठपूजा पुरःसरम् ।
पूर्वे चंडं प्रचंडं च दक्षिणे नंदिभृंगिणौ ॥ ६ ॥
अनंतं पश्चिमे काममुत्तरे गणनायकम् ।
कार्तिकेयं मध्यदेश आधारशक्तिपूर्वकम् ॥ ७ ॥
अनंतं पृथिवीं चैव त्रिवृत्तं च त्रिमंडलम् ।
अथ ध्यानं प्रवक्ष्यामि श्वेतं वृषभमेव च ॥ ८ ॥
द्विभुजं शूलहस्तं च सर्वाभरणसंयुतम् ।
अरोपयेत्स्वतंत्रेण मूले विष्णुं समर्चयेत् ॥ ९ ॥

शंकरं च तथा मध्ये अग्रे ब्रह्माणकं यजेत् ।
बलिं च पिष्टकान्नं च दत्त्वा च श्रपयेच्चरुम् ॥१०॥
जुहुयाद्रुद्रमुद्दिश्य रुद्रसंख्याहुतिं क्रमात् ।
अन्येषां च स्रुवेणैव होमं दद्यात्प्रयत्नतः ॥११॥
रोपयेत्कदलीवृक्षमाचार्यं परितोषयेत् ।
कृत्वा पूर्णां पंचधारां कृत्वा चापि प्रदक्षिणाम्॥१२॥
क्षीरधारां च संपाद्य अर्घ्यं दत्त्वा गृहं व्रजेत् ॥१३॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागेऽष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

### वटवृक्षप्रतिष्ठाविधिवर्णनम्

सूत उवाच

वटस्थानमथो वक्ष्ये तस्य मूले तु दक्षिणे ।
त्रिहस्तवेदिमुपरि स्थापयेत्कलशत्रयम् ॥ १ ॥
गणेशं च शिवं विष्णुं पूजयित्वा हुनेच्चरुम् ।
रक्तसूत्रैस्त्रिगुणितैः स्वर्णमेव पुरःसरम् ॥ २ ॥
यवक्षीरबलिं दद्यादुत्सृजेद्वाक्यमुच्चरन् ।
यूपमारोपयेत्पश्चाद्वट मूलैः समर्पयेत् ॥ ३ ॥
यक्षान्नागांश्च गंधर्वान्सिद्धांश्चैव मरुद्गणान् ॥ ४ ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

### बिल्ववृक्षप्रतिष्ठाविधिवर्णनम्

सूत उवाच

वक्ष्ये बिल्वप्रतिष्ठां च पूर्वेद्युरधिवासयेत् ।
त्र्यंबकं चेति मंत्रेण स्थापयेद्गंधवारिणा ॥ १ ॥
सुनाभेति च मंत्रेण मे गृह्णामीति चाक्षतम् ।
कयानेति ततो धूपं वस्त्रं माल्यं निवेदयेत् ॥ २ ॥
यजेद्रुद्रं ततो देवं मध्ये दुर्गां धनेश्वरम् ।
ततः कल्ये समुत्थाय नित्यं निर्वर्त्य शास्त्रतः ॥ ३ ॥
स्वगृहे सप्त विप्रांश्च भोजयेद्द्विजदंपती ।
मूले हस्तद्वयं दत्त्वा वर्तुला वेदिका भवेत् ॥ ४ ॥
तत्र गैरिकयुक्तेन कुसुंभचूर्णके न वा ।
निशारक्तेन वा कुर्यादष्टपत्रं सुशोभनम् ॥ ५ ॥
निवेष्टनं ततः कुर्याद्वृक्षस्य द्विजसत्तमाः ।
रक्तसूत्रैर्वेष्टयेच्च पंचसप्तनवभिस्तु ॥ ६ ॥
व्रीहींश्च वापयेत्तत्र उत्तराभिमुखस्तथा ।
शिवं विष्णुं च ब्रह्माणं पूययेद्भूतिमिच्छता ॥ ७ ॥
शिवं च नायकं कुर्यादादित्यान्पत्रमूलके ।
शेषं च तरुमूले तु मध्येऽनंतं शतक्रतुम् ॥ ८ ॥
वनपालं च सोमं च सूर्यं पृथ्वीमनुक्रमात् ।
होमस्तिलाक्षतैः कार्यो बलिं दद्याद्घृतौदनैः ॥ ९ ॥
यक्षेभ्यो माषभक्तं च वायनानि च द्वादश ।
ग्रहाणां प्रीतये दद्यात्क्षीरेणावेष्ट्य दक्षिणाम् ॥१०॥
कांचनं कांस्य पात्रं च तांबूलं ताम्रपात्रकम् ।
यूपारोपं कर्णवेधं सवित्रेऽर्घ्यं निवेदयेत् ॥११॥
अथ रात्रिप्रतिष्ठां च वक्ष्ये शास्त्रानुसारतः ।
यस्यैकवृक्षसंस्कारे न पुनर्जायते भुवि ॥१२॥
पूर्वेद्युरुपवाहे तु वृक्षमूले घटं न्यसेत् ।
विष्णुं शिवं गणेशं च पूजयित्वा तु स्थापयेत् ॥१३॥
कलशान्पञ्च वा सप्त गंधतैलैरलंकृतान् ।
दुग्धेन पंचगव्येन शंखतोयेन यत्नतः ॥१४॥
सूत्रैः संवेष्टनं कृत्वा वस्त्रमाल्यैरनंतरम् ।
कांडादिति च मंत्रेण दद्याद्दूर्वाक्षतं ततः ॥१५॥
विष्णुसूक्तेन च पुनः सिंदूरांजनचंदनम् ।
दद्यात्फलं च दीपं च स्वयं तत्र स्वपेत्ततः ॥१६॥
ततः प्रभाते विमले ब्राह्मणान्सप्त भोजयेत् ।
पूर्ववत्कलशं कृत्वा शिवं विष्णुं गणाधिपम् ॥१७॥
सोमं वनस्पतिं चैव एककुम्भे समर्च्चयेत् ।
हुनेत्पंचाहुतीस्तत्र यूपं दद्यात्समुत्सृजेत् ॥१८॥
बलिं च पायसेनैव प्रकुर्यात्कर्णवेधनम् ।
वेष्टयेत्क्षीरतोयेन धान्यं धेनुं च दक्षिणाम् ॥१९॥
दद्यादर्घ्यं हुनेत्पूर्णं भोजयेद्द्विजदंपती ॥२०॥

इतिश्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

### पूगाम्रादिफलयुक्तवास्तुप्रतिष्ठाविधिवर्णनम्

सूत उवाच

शतहस्तमितां मुष्टिं नानातरुविभूषिताम् ।
पूगाम्रादिफलैर्युक्तं वास्तुं कृत्वा यजेत्तु यः ॥ १ ॥
षष्टिपर्वसहस्राणि स्वर्गलोके वसेच्चिरम् ।
तद्विधानं प्रवक्ष्यामि यथाशास्त्रानुसारतः ॥ २ ॥
नित्यं निर्वर्त्य विधिवत्पंच विप्रान्समर्चयेत् ।
भोजयेत्पूजयेद्विष्णुं प्रजापतिसमन्वितम् ॥ ३ ॥
अग्निकार्यं ततः कृत्वा दद्याद्विप्राय दक्षिणाम् ॥ ४ ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

### शैलदारुतृणमयमण्डपप्रतिष्ठाविधिवर्णनम्

सूत उवाच

प्रतिष्ठां मंडपस्यैव शैलदारुमयस्य च ।
तृणकाष्ठस्य च विभो तृणवत्तस्य च द्विजाः ॥ १ ॥
अधिवासस्य पूर्वेद्युः शुभे लग्ने घटं न्यसेत् ।
सूर्यं सोमं तथा विष्णुं कलशे तु समर्चयेत् ॥ २ ॥
प्रोक्षयेत्कुशतोयेन आपोहिष्ठेति वै ऋचा ।
आप्यायस्वेति गंधेन गंधद्वारेति गंधकम् ॥ ३ ॥
आकृष्णेनेति तैलेन श्रीश्च ते इति चंदनम् ।
सिंदूरालक्तकं दद्यादंजनं पूर्वया सह ॥ ४ ॥
ततः प्रभाते विमले श्राद्धं वृद्ध्यात्मकं चरेत् ।
दिक्पालांश्चैव विन्यस्य मंडपे शुभलक्षणे ॥ ५ ॥
मध्ये वेद्यंतरे चैव राजभिर्मंडलं लिखेत् ।
सूर्यमावाहयेत्तत्र सोमं विष्णुं च पार्श्वयोः ॥ ६ ॥
गणेशं च ग्रहांश्चैव दिक्पालांश्च घटेऽर्चयेत् ।
पायसं जुहुयादग्नावष्टोत्तरशतं तथा ॥ ७ ॥
आदित्यस्य तथा विष्णोः सोमस्य द्वादशाहुतीः ।
बलिं च पायसं दद्यात्तैलं क्षीरमथापि वा ॥ ८ ॥
तत उत्सृज्य विधिवद्वाक्यमेतदुदीरयेत् ।
जानुभ्यामवनिं गत्वा शनैरोष्ठं न चालयेत् ॥ ९ ॥
वास्तोष्पतिं च तत्रैव पूजयेद्गन्धचन्दनैः ।
अर्घ्यं दद्याच्च विधिवद्भूतेनैवाहुतिं हुनेत् ॥१०॥
( ॐ अद्येत्यादि ब्राह्मणादिसर्वसत्त्वेभ्यो विष्णुप्रीणनार्थमिमं मण्डपं सुपूजितं सूर्यदैवतं शैलेयेष्टकादिभिः सर्वसत्त्वेभ्यो रचितं श्रुतिस्मृत्युक्तफलप्राप्तिकामनया अमुकऋषिसगोत्रः श्यमुकदेवशर्माहमुत्सृजे ॥ )
ततः श्वेतघटं दद्यान्मंण्डपोपरि सत्तमाः ।
त्रिगुणेन निशाक्तैर्वा वेष्टयेद्वारिधारया ॥११॥
दक्षिणां विधिवद्दद्यात्सूर्यायार्घ्यं निवेदयेत् ।
तृणवेश्मनि वै सूर्यं वासुदेवसमन्वितम् ॥१२॥
घटे गणेशं वरदं वरं कृत्वा समुत्सृजेत् ।
ऐशान्यां दापयेद्यूपं ध्वजान्दिक्षु प्रकल्पयेत् ॥१३॥
मण्डपोपरि कलशं संस्थाप्य मन्त्रमुच्चरेत् ।
प्रपायां वरुणः पूज्यो विश्वकर्मा प्रयत्नतः ॥१४॥
पृथिवीं च गणेशं च पूजयित्वा हुनेद्घृतम् ।
सर्ववर्ज्यमिदं वाक्यं ध्वजमात्रं विधीयते ॥१५॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

### महायूपप्रतिष्ठाविधिवर्णनम्

सूत उवाच

चतुर्हस्तं महायूपं हस्तषोडशनिर्मितम् ।
वक्ष्ये तं च प्रतिष्ठां च रात्रौ त्रैरात्रिकं यजेत् ॥ १ ॥
वरुणं सितकुंभे च प्रपाकूपस्य मध्यमे ।
गायत्र्या स्नापयेत्पूर्व मापोहिष्ठेति वै ऋमात् ॥ २ ॥
गंधद्वारेति गन्धं च अंशुना चेति तैलकम् ।
मनोज्ञा इति कुसुमं धूरसीति च धूपकम् ॥ ३ ॥

कयानेति ददेद्वस्त्रं नैवेद्यं दीपचन्दनम् ।
आदौ श्राद्धं न कर्तव्यं प्रतिष्ठांते विधीयते ॥ ४ ॥
दंपतीभोजनं कुर्याद्वरयेदेकब्राह्मणम् ।
मंडपे चाष्टहस्ते च कलशं तत्र विन्यसेत् ॥ ५ ॥
पूजयेद्वरुणं देवं नारायणसमन्वितम् ।
शिवं च पृथिवीं चैव स्वैः स्वैर्मन्त्रैर्यथाक्रमात् ॥ ६ ॥
ततः कुशकंडिकां कृत्वा स्थालीपाकविधानतः।
वरुणं च समभ्यर्च्य जुहुयादाहुतीर्दश ॥ ७ ॥
अन्येषां च स्त्रुवेणैव दद्यादेकाहुतिं क्रमात् ।
वरुणस्योत्कवरुणं तत्त्वायामि ततः परम् ॥ ८ ॥
वरुणस्योत्तंभनमसीति च आभ्यांदेवास्तथैवच ।
येनापावकचक्षसा पंचमं समुदाहृतम् ॥ ९ ॥
रात्रस्य यूपमित्यादि परं च दशमस्तकम् ।
ततः स्विष्टकृतं कृत्वा सप्तजिह्वं चरुं नयेत् ॥१०॥
इह वेत्यादिकं पंच ततः पंचाहुतिं हुनेत् ।
शंभवे च पृथिव्यै च महाराजाय च क्रमात् ॥११॥
चरुपाकेति नैवेद्यं बलिं चैवागुरुदनम् ।
शंकराय च रुद्राय शर्वाय पशुपतये इति च ।
उग्राय असनायेति भवाय तदनंतरम् ॥१२॥
महादेवाय च पुनरीशानायेति च क्रमात् ।
चरुपाकेति नैवेद्यं बलिं चैवागुरुदनम् ॥१३॥
वाक्यपूर्वं सृजेत्तोयं तत्र वाक्करणं शृणु ॥१४॥
( ॐ अद्येत्यादि ब्राह्मणादिसर्वसत्त्वेभ्यः
अमुकगोत्रस्य मत्पितुरमुकदेवशर्मणः श्रुतिः
स्मृत्याद्युक्तं कूपप्रतिष्ठाजन्यफलप्राप्तये इमं
सुपूजितं सच्छादितं वरुणदैवतममुकसगोत्रः
अमुकदेवशर्माहमुत्सृजे ) ॥
दक्षिणां विधिवद्दद्याद्गां च दद्यात्पयस्विनीम् ॥१५॥
मंडपे क्षुद्रकूपे च प्रतिष्ठां शृणुत द्विजाः ।
गणेशं वरुणं कुंभे विधिवत्पूजयेत्सुधीः ॥१६॥
वेष्टयेद्रक्तसूत्रैश्च दद्याद्यूपं समुत्सृजेत् ।
दक्षिणां विधिवद्दद्याद्विप्रा संपूजयेत्ततः ॥१७॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः

### पुष्पारामप्रतिष्ठाविधिवर्णनम्

सूत उवाच

पुष्पारामप्रतिष्ठां तु वक्ष्ये शृण्वंतु वै द्विजाः ।
मध्ये वेदिं त्रिहस्तां च कृत्वा संस्थापयेद्घटम् ॥ १ ॥
अधिवासस्य पूर्वेद्युर्यथावद्विप्रभोजनम् ।
कृत्वा घटे गणेशं च सूर्यं सोमं हुताशनम् ॥ २ ॥
नारायणं स्थंडिले च जुहुयान्मधुपायसम् ।
विधिवद्यूपमारोप्य गोधूमान्सेचयेद्गुरौ ॥ ३ ॥
वेष्टयेद्रक्तसूत्रैश्च प्रदद्याच्चेति दक्षिणाम् ।
एतद्धाराजलेनैव यवान्नं सगुडं पयः ॥ ४ ॥
ऐशान्यां यूपमारोप्य विधिवद्द्विजसत्तमाः ।
कर्णवेधं समारोप्य स्नापयेत्कुशवारिणा ॥ ५ ॥
धान्यं यवं च गोधूमं दद्याद्विप्राय दक्षिणाम् ।
शतधारजलेनैव वेष्टयेत्परितो द्विजाः ॥ ६ ॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे चतुर्दशोऽध्यायः ॥१४॥

## पञ्चदशोऽध्यायः

### तुलस्यादिवृक्षप्रतिष्ठाविधिवर्णनम्

सूत उवाच

ज्येष्ठाषाढे तुलस्याश्च प्रतिष्ठां विधिवच्चरेत् ।
यजमानः शुद्धदिने एकादश्यामथापि वा ॥ १ ॥
ततो रात्रौ घटं स्थाप्य पूजयेत्परमेश्वरम् ।
नारायणं शिवं सोमं ब्रह्माणं चेंद्रमेव च ॥ २ ॥
गायत्र्या स्नपनं कुर्यात्तथोक्तैर्मंत्रकैरपि ।
कयानेति च गंधेन अश्वनेति च तैलकम् ॥ ३ ॥
त्वां गंधर्वेति च पुनः पुष्पं मंडंशनेति च ।
मानस्तोकेति कुसुमं श्रीश्चतेति च चंदनम् ॥ ४ ॥

वैश्वदेवीति च पुनर्मंत्रेणानेन चंदनम् ।
दूर्वामंत्रेण दूर्वाश्च रूपेणेति च दर्पणम् ॥ ५ ॥
फलमंत्रेण च फलं समेधेति च अंजनम् ।
सकुशैः पीतसूत्राद्यैर्वेष्टयेत्क्षीरधारया ॥ ६ ॥
शतधाराजलेनैव वेष्टयेत्स्वगृहं व्रजेत् ।
वस्त्रेणावृत्य विधिवद्बुधः काले घटं न्यसेत् ॥ ७ ॥
सप्तपंचत्रिभिर्वाथ तद्विष्णोरिति वै ऋचा ।
स्नापयेदथ साध्वीभिः कृतमंगलपूर्वकम् ॥ ८ ॥
ततः श्राद्धं समाप्यैव मातृपूजापुरःसरम् ।
आचार्यं वरयेत्पूर्वं गंधाद्यैः कुसुमैरपि ॥ ९ ॥
आचार्य एव होता स्याद्ब्रह्माणं च सदस्यकम् ।
मंडपे दशहस्तेऽपि वर्तुले स्थंडिलेषु च ॥१०॥
सहस्रं मंडलं कुर्यात्तत्र नारायणं यजेत् ।
ग्रहाँल्लोकेश्वरान्मध्ये आदित्यांश्च मरुद्गणान् ॥११॥
रुद्रान्वसूंश्च कलशे परितश्च समर्चयेत् ।
ततः कुशकंडिकां कृत्वा होमं तिलयवेन तु ॥१२॥
अष्टोत्तरशतं कुर्यादन्येषां शक्तितो हुनेत् ।
नारायणं समुद्दिश्य दद्यादुत्सृज्य सत्तमाः ॥१३॥
मध्ये यूपं समुद्दिश्य चरुशाकं बलिं ददेत् ।
कदलीं दिक्षु संन्यस्य ध्वजान्दिक्षु प्ररोपयेत् ॥१४॥
दक्षिणां कांचनं दद्यात्तिलं धान्यं सपुष्पकम् ।
धेनुं पयस्विनीं दद्याद्वेष्टयेत्क्षीरधारया ॥१५॥
जयंत्याः सोमवृक्षस्य तथा सोमवटस्य च ।
पनसस्य कदंबस्य निंबस्य द्विजसत्तमाः ॥१६॥
पाटलाकनकस्यैव शाल्मलीनिंबकस्य च ।
बिंबाशोकवटस्यैव प्रतिष्ठां नैव कारयेत् ॥१७॥
भद्रकस्य शमीकोणचंडातकबकस्य च ।
खदिरस्यैव कर्तव्यं कर्णवेधं न कारयेत् ॥१८॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे पंचदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

### वृक्षादीनामुत्तममध्यमकनिष्ठप्रकारेण प्रतिष्ठाविधिवर्णनम्

सूत उवाच

वृक्षादीनां प्रतिष्ठांच उत्तमेपुत्तमं चरेत् ।
मध्येमध्ये कनिष्ठा तु कनिष्ठं परिकीर्तितम् ॥ १ ॥
वर्तुलं मंडलं कुर्यात्तत्तु शीर्षे तथान्त्यके ।
मध्ये वा वेदिकां कुर्यात्तन्मध्ये कुंडमंडलम् ॥ २ ॥
पूर्वेद्यू रात्रिसमये घटं संस्थाप्य पूजयेत् ।
शेषं संपूज्य विधिवत्पृथिवीं च शिवं तथा ॥ ३ ॥
गंधतोयेन गायत्र्या सेतुं संपूज्य मोक्षयेत् ।
कयानेति च मन्त्रेण आप्यायस्वेति वै ऋचा ॥ ४ ॥
दद्याद्गन्धादिकं श्रीश्च ते लक्ष्मीरिति चन्दनम् ।
दूर्वामन्त्रेण दूर्वाश्च फलमन्त्रेण वै फलम् ॥ ५ ॥
शन्नोदेवीति मन्त्रेण दद्यात्कुशपवित्रकम् ।
सुरासुरेति मन्त्रेण प्रदद्याद्वस्त्रयुग्मकम् ॥ ६ ॥
अञ्जनालक्तकं कुर्यान्मनोन्ना इति संपठन् ।
कुर्याच्छ्राद्धं परदिने वसुधारापुरःसरम् ॥ ७ ॥
वरयेदथ आचार्यं होतारं नृवरश्चरेत् ।
पात्रद्वयं विधातव्यं सदस्याचार्यमेव च ॥ ८ ॥
सेतुयागे विधातव्यं तथा धान्याचलेपि च ।
सहस्रहोमे वैकं तु विवाहे ब्रह्मऋत्विजौ ॥ ९ ॥
यजेदेनं कृते मौलियागार्थं यागमण्डपम् ।
वेदिमावाहयेत्पूर्वं मंडपं प्रतिपूजयेत् ॥१०॥
विघ्नग्रहाँल्लोकपालान्सर्वसिद्धिप्रदायकान् ।
स्थंडिले सर्वतोभद्रे शेषं विष्णुं प्रदर्शयेत् ॥११॥
तत्रैव तु वराहाख्यं प्रतीतमूर्तिमुत्तमम् ।
स्थालीपाकेन जुहुयादष्टाविंशतिकत्रयम् ॥१२॥
आज्येन तु वराहस्य होमपञ्चकमीरितम् ।
ततस्तिलयवं नैव एकैकामाहुतिं क्रमात् ॥१३॥
बलिं दद्यात्पृथग्रूपं शेषयेद्विधिपूर्वकम् ।
पिष्टकान्नं घृतान्नं च विस्तरे वा गुडौदनम् ॥१४॥
मापभक्तं तु लोकाय पृथिव्यै परमान्नकम् ।
वाक्यपूर्वं सृजेद्धीरो वाक्यप्रकरणं शृणु ॥१५॥
(ॐअद्येत्यादि एकविंशतिकुलस्य विशिष्टस्वर्ग-
प्राप्तय इमं सेतुं संक्रमसमेतं विष्णुदैवतं सुरपू-
जितं विधिवद्वासुदेवस्य प्रीतयेऽहमुत्सृजे ।)
बद्धाञ्जलिः पठेन्मन्त्रं कुर्याच्च विधिवत्ततः ।
पिच्छिले पतितानां च उद्गतेनाङ्गभङ्गतः ।
प्रतिष्ठिते धर्मसेतौ धर्मो मे स्यान्न पातकम् ॥१६॥

सेतोरस्य प्रबन्धस्य श्रद्धया परया युतः ।
ये चात्र प्राणिनः सन्ति सर्वेषां प्राणधारकाः ॥१७॥
वेदागमेन यत्पुण्यं कथितं सेतुबन्धने ।
तत्पुण्यं तु मया देव पार्थेये हि समर्पितम् ॥१८॥
यूपं दद्यादिति मन्त्रेण अन्ते चापि तथा ध्वजान् ।
विधिवद्दक्षिणां दद्यात्कुलानि नव पञ्च वा ॥१९॥
पूर्णां दत्त्वा सवित्रेऽर्घ्यं दत्त्वा च स्वगृहं व्रजेत् ।
अनातपे क्षुद्रसेतोः प्रतिष्ठां विधिवच्चरेत् ॥२०॥
पूर्वं च दधिवासं च प्रभाते विप्रभोजनम् ।
सेतुमध्यं ततो गत्वा गन्धादीन्विधिवच्चरेत् ॥२१॥
विष्णुं शिवं हुताशं च एककुण्डे समर्चयेत् ॥
वास्तोष्पतिं यजेत्तत्र होमं तिलयवेन तु ॥२२॥
कुर्यादेकैकशो विप्रा अष्टाविंशतिसंख्यया ।
उत्सृज्य दापयेद्रूपं ध्वजवर्ज्यं हि सत्तमाः ।
ज्ञातिभिः सह भुञ्जीत कृतकृत्योऽभिधीयते ॥२३॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे षोडशोऽध्यायः ॥ १६ ॥

# सप्तदशोऽध्यायः

## प्रकारान्तरेण गोप्रचारप्रतिष्ठाविधिवर्णनम्

सूत उवाच

तत्र दंडे च विप्रेन्द्राश्चतुरस्त्रे समंततः ।
षष्टि हस्तमितां भूमिं तस्य पूर्णां मनोरमाम् ॥ १ ॥
प्रचारार्थं गवां चैव यो दद्यात्सुसमाहितः ।
षष्टिवर्षसहस्राणि रुद्रलोके महीयते ॥ २ ॥
तदर्धं च तदर्धं च तदर्धं वा समुत्सृजेत् ।
यो दद्यात्केवलां भूमिं कन्यां दासीं तथा वृषम् ॥ ३ ॥
अलंकार विना धेनुं फलस्यार्धं प्रकीर्तितम् ।
अमण्डपे शुभे स्थाने शर्करादिविवर्जिते ॥ ४ ॥
द्विहस्तवेदिकामध्ये प्रकुर्यात्सेतुमंडपम् ।
तत्र संपूजयेद्रुद्रं ब्रह्माणं च शचीपतिम् ॥ ५ ॥
गणेशं क्षेत्रपालं च शेषं चैव दिगीश्वरान् ।
पञ्चोपचारैर्विधिवत्पूजयेत्पायसादिना ॥ ६ ॥
स्थालीपाकेन जुहुयादन्ते वै विप्रभोजनम् ।
अत्र यागे श्राद्धवर्ज्यं पूर्वेद्युरधिवासयेत् ॥ ७ ॥
त्र्यम्बकेनैव मंत्रेण भूमिं संस्थाप्य पूजयेत् ।
तद्विष्णोरिति मंत्रेण गन्धतैलं सचन्दनम् ॥ ८ ॥
प्रदद्यादसुनीतेति पुनस्तु नैव स्थापयेत् ।
पञ्चगव्येन च पुनः श्रीश्चतेति च पुष्पकम् ॥ ९ ॥
एवं यूपस्य च तथा अधिगृह्णाति मंत्रकम् ।
गन्धद्वारेति गन्धेन अंशुनातेति तैलकम् ॥१०॥
सुरासुरेति कुसुमं दूर्वामन्त्रेण दूर्विकाम् ।
प्रभाते पूजयेद्देवान्रुद्रमुद्दिश्य होमयेत् ॥११॥
स्थालीपाकेन विधिना अन्येषां पूर्ववच्चरेत् ।
उत्सृज्यारोपयेद्दीपं स्थिरो भवेति वै ऋचा ॥१२॥
तंत्रेण निर्मितं कुर्यात्सफलं च त्रिहस्तकम् ।
हस्तैकं प्रापयेन्मध्ये क्षेत्रे चैव विशेषतः ॥१३॥
स्थापयेत्तत्र मन्त्रेण पञ्चगव्येन यत्नतः ।
मधुवातेति मधुना आप्यायस्वेति वै दधि ॥१४॥
तद्विष्णोरिति मन्त्रेण वटतोयैरनन्तरम् ।
पृथिवीं च वराहं च कूर्ममाधवशक्तिकान् ॥१५॥
वास्तोष्पतिं च विष्णुं च यूपे संपूजयेत्क्रमात् ।
दद्यादर्घ्यं च विवरे गर्ते होमं विवर्जयेत् ॥१६॥
अर्घ्यपाद्ये च दुष्टे च हस्तेनोत्सृजे सत्तमाः ।
(ॐ अद्येत्यादि गोब्राह्मणसर्वसत्त्वेभ्यः पर्यटनार्थाय इमांभूमिं सुपूजितां विष्णुदेवतां गोप्रचाररूपिणीं श्रुतिस्मृत्याद्युक्तफलप्राप्तयेऽहमुत्सृजे ।)
शिवलोकस्थिता गावः सर्वदेवैः सुपूजिताः ।
एवं निवेदयेद्विप्रो गोप्रचारं समाहितः ।
स मुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ॥१७॥
यावंति तृणगुल्मानि संति भूमौ शुभानि च ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥१८॥

इति श्रीभविष्ये महापुराणे तृतीयभागे गोप्रचारविधौ सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः

## एकाहसाध्यप्रतिष्ठाविधिवर्णनम्

सूत उवाच

कलौ चैकाहसाध्येन प्रतिष्ठामल्पवित्तवान् ।
सद्योधिवासमाज्येन प्रकुर्यात्तांत्रिकोत्तमः ॥ १ ॥
उत्तरं तु गते हंसे अतीते चोत्तरायणे ।
शरत्काले व्यतीते तु वसंते यज्ञमारभेत् ॥ २ ॥
नारायणादिमूर्तीनां द्वात्रिंशद्भेद एव तु ।
प्रतिष्ठां प्रतिमानां च गजास्यादींश्च[2] सत्तमाः ॥ ३ ॥
नित्यं निर्वर्त्य मतिमान्कुर्यादभ्युदयं ततः ।
विप्रान्संभोजयेद्वाथ ततो यागगृहं व्रजेत् ॥ ४ ॥
गणेश ग्रहदिक्पालान्प्रतिकुंभेषु पूजयेत् ।
स्थंडिले पूजयेद्विष्णुं परिवारगणं यजेत् ॥ ५ ॥
स्नापयेत्प्रथमं देवं तोयैः पञ्चविधैरपि ।
पञ्चामृतैः पञ्चगव्यैः पंचमृत्पिण्डकैरपि ॥ ६ ॥
तिलतैलैश्च स्नेहैश्च कषायैरपि सत्तमाः ।
पञ्चपुष्पोदकैर्वाथ त्रिपदैरपि सत्तमाः ॥ ७ ॥
तुलसीकुसुमापुष्पपत्राण्या दुस्त्रिपत्रकम् ।
पञ्चकाम्रशमीपद्मकरवीरं च पंचकम् ॥ ८ ॥
मृत्तिका करिदंतस्य तथाश्वखुरमृत्तिका ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तु पंचमम् ॥ ९ ॥
कुर्यात्प्राणप्रतिष्ठां च होमं कुर्याद्यथाविधि ।
दक्षिणां विधिवद्दद्यात्पूर्णां तु तदनंतरम् ॥१०॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागेऽष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## काल्यादिदेवताप्रतिष्ठाविधिवर्णनम्

सूत उवाच

अतः परं तु विप्रेन्द्राः काल्यादीनां तथैव च ।
अधिवास्य च पूर्वेद्युः श्राद्धमभ्युदयात्मकम् ॥ १ ॥
प्रथमे जलजैः स्नानं पञ्चगव्यैरनंतरम् ।
पूर्ववच्च विधानेन कुंभे दुर्गां समर्चयेत् ॥ २ ॥
पञ्चामृतैः पञ्चगव्यैः करीषशतधारया ।
श्रीबिल्वे पूजयेद्देवीं दद्यात्प्राणमनंतरम् ॥ ३ ॥
बिल्वपत्रैः फलैर्वापि दद्याच्चापि शताहुतीः ।
एकैकशस्तु सर्वेषां दद्यात्काञ्चन दक्षिणाम् ॥ ४ ॥
प्रतिमां कालिकायाश्च तारायाश्च पृथक्पृथक् ।
प्राह्यं विनार्चयेद्विप्राः पञ्चपञ्चशतैरपि ॥ ५ ॥
भोजयेत्स्नापयेद्देवीं गंधतोयैर्दिन त्रयम् ।
ताम्रकुंभेऽर्चयेद्देवीं त्रिदिनं प्रातरेव हि ॥ ६ ॥
समीरणं ततो दद्यात्पेटिकायां निवेशयेत् ।
ततोऽपि गन्धतोयैश्च स्नापयेत्कन्यकादिभिः ॥ ७ ॥
ततो वै चाष्टमदिने रात्रावपि प्रपूजयेत् ।
पशुदानं प्रकर्तव्यमग्निकार्यं च पायसैः ॥ ८ ॥
शिवलिङ्गप्रतिष्ठां च वक्ष्ये तंत्रमतं यथा ।
त्रिविप्रं भोजयेद्विप्रा अधिवास्यं विशेषतः ॥ ९ ॥
नित्यं समाप्य च पुनः कुर्यादभ्युदयं ततः ।
आचार्यं वरयेत्प्रातः स्नापयेत्पूर्ववर्त्मना ॥१०॥
परिवारगणैः सार्द्धमर्चयेत्तदनंतरम् ।
दद्यात्समीरणं पश्चादग्निकार्यं समाचरेत् ॥११॥
तिलहेममयीं गां च दद्याद्गां च विधानतः ।
न नाम न च गोत्रं च होमकर्मणि सर्वदा ॥१२॥
पूर्णिमायां विशेषेण नान्येषां च कथंचन ।
होमांते वसुधारां च कुंभे दत्त्वा विधानतः ॥१३॥
त्रिहस्तचरकायं च हस्तैकं चतुर्हस्तके ।
शालग्रामशिलायाश्च प्रतिष्ठां विधिवच्चरेत् ॥१४॥
सद्योधिवासयेद्देवं द्वादश्यां स्नापयेदथ ।
रत्नतोयैः परिमलैस्त्रिगंधैः पंचपल्लवैः ॥ १५॥
कुंभे प्रजापतिं स्थाप्य श्वेताब्जं नवनाभके ।
नवदुर्गोक्तमार्गेण पूजयेत्परमेश्वरम् ॥१६॥
चक्रस्वरूपतो ज्ञेयं प्रदद्याच्च समीरणम् ।
आनीय ताम्रभांडे च त्रिकालं प्रतिपूजयेत् ॥१७॥

---

१ विद्धातेति शेषः । २ संपूज्येति शेषः । ३ तदेव व्यासि-नाह—नित्यं निर्वर्त्येत्यादि ।

पायसान्नैरुत्पलैर्वा पङ्कजैर्वापि होमयेत् ।
सकाञ्चनं वस्त्रयुग्मं प्रदद्याद्भूरिदक्षिणम् ॥१८॥
श्रीसूर्यस्य गणेशस्य विरिञ्चेश्चापि सत्तमाः ।
वटवृक्षांतिकं गत्वा स्थापयेद्वरुणं ततः ॥१९॥
रक्ताब्जे पूजयेत्सूर्यं परिवारसमन्वितम् ।
अष्टाविंशतिभिर्दत्त्वा दद्यात्प्राणमनंतरम् ॥२०॥
एकाहमथवाकाशे गुप्तं कृत्वा दिनत्रयम् ।
त्र्यहादेव पुनः पूजां पुनर्होमं समाचरेत् ॥२१॥
पुनश्च भोजयेद्विप्रान्दद्यात्काञ्चनदक्षिणाम् ।
वाराह्यास्त्रिपुरायाश्च नारिकेलोदकैरपि ॥२२॥
स्थापयेद्वा विधानेन सिन्दूराद्यैः समर्चयेत् ।
दद्यात्समीरणं पश्चात्पुनः पूजां च होमयेत् ॥२३॥
पशुदानं च कर्तव्यं षण्मासैः पञ्चमोदकैः ।
कुमारीं भोजयेद्रात्रौ दद्यात्काञ्चन दक्षिणम् ॥२४॥
प्रतिमां भुवनेशीं च महामायाम्बिकामपि ।
कामाक्षीं च ततो देवीमिन्द्राक्षीं चापराजिताम् ॥२५॥
पूर्वेद्युः रात्रिसमये पिष्टकाष्टौ निवेदयेत् ।
अष्टौ निर्माणयेत्पश्चाद्बलिं चाष्टौ विधानवित् ॥२६॥
परिवारगणैः सार्द्धं पूजयेत्प्रयतः सुधीः ।
समीरणं ततो दद्याच्छिवं सूर्यं यजेत्पुनः ॥२७॥
पायसान्नैश्च जुहुयात्त्रिदिनं लिपिपूजनम् ।
कुमारीपूजनं कुर्यादग्निकार्यं दिनत्रयम् ॥२८॥
पशुदानं च कर्तव्यं विभवे सति सत्तमाः ।
रात्रौ जागरणं कुर्यान्मठोत्सवपुरःसरम् ॥२९॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे एकोनविंशोऽध्यायः ॥ १९ ॥

# विंशोऽध्यायः

## दुर्निमित्तजनितारिष्टशान्तिप्रकारवर्णनम्

सूत उवाच

दुर्निमित्तान्यथो वक्ष्ये शृण्वंतु मुनिसत्तमाः ।
यस्य ये ग्रहदोषाः स्युस्तेषां शांतिं यथाक्रमात् ॥ १ ॥
दिव्यंतरिक्षे भौमे चेत्येवं त्रिः परिकीर्तितम् ।
ग्रहर्क्षाद्यैः कृतं दिव्यमान्तरिक्षं निबोध मे ॥ २ ॥
उल्काहितो दिशो दाहः परिवेषस्तथैव च ।
जलाशयानां वै कृत्यं भौमं तदपि कीर्तितम् ॥ ३ ॥
भौमं चाल्पफलं ज्ञेयं दिव्यांतरिक्षमेव च ।
सप्ताहमफलं दद्याद्दैवं चापि च तत्क्षणात् ॥ ४ ॥
देवानां हसनं चैव कल्कनं रुधिरस्रवः ।
अकस्माद्व्यसनं तत्र यत्र निर्घातनिर्दयः ।
सर्पाद्यारोहणं चैव दैवं तदपि कीर्तितम् ॥ ५ ॥
ततो मेघात्समुत्पन्ना यदि वृष्टिः शिलातले ।
सप्ताहाभ्यंतरे जीवमुत्पन्नं निष्फलं भवेत् ॥ ६ ॥
एकराशिस्थिताः पापाः शनिभौमदिवाकराः ।
पृथ्वी धूमाकुला तत्र रुदंति बहवो जनाः ॥ ७ ॥
अभिचारं गते जीवे शनौ च तत्र नागते ।
तत्र पश्यति राजेन्द्रः को धरां धारयिष्यति ॥ ८ ॥
सूर्यमपश्यनो द्वंद्वं दिग्दाहश्च तथैव च ।
दर्शनं धूमकेतोश्च नक्षत्रे धूमदर्शनम् ॥ ९ ॥
भूकम्प एव मासे च एकमासे तथा दिने ।
राज्ञो जन्मदिने वाथ शक्रचापं दिनांतरे ॥१०॥
दर्शनं खरवातस्य ग्रहयुद्धस्य दर्शनम् ।
मासत्रये तु ग्रहणमुल्कापातप्रपातनम् ॥११॥
आकाशेऽप्यथ भूमौ च तत्र मण्डूकमेव च ।
हरिद्रावृष्टिः पाषाणे सिंहबिल्वाकृतिर्यदि ।
दर्शने राष्ट्रदुर्भिक्षमकरं नृपतिक्षयः ॥१२॥
चैत्रे कुम्भे नदीवेगदर्शने विप्लवो भवेत् ।
अर्कस्याद्भुतमेतद्धि स्रुग्युक्तं श्रपयेच्चरुम् ॥१३॥
आकृष्णेनेति मन्त्रेण अथ वार्केण यत्नतः ।
प्रासादतोरणं तत्र द्वारं प्राकारवेश्म च ॥१४॥
धान्यसारं गवां सारं कूपे कुम्भप्रदर्शनम् ।
आदित्यस्याद्भुतं विद्यात्कमलं जुहुयात्ततः ॥१५॥
सहस्रं जुहुयाद्वाथ ततः शांतिर्भवेद्ध्रुवम् ।
विकृताः पक्षिणश्चैव पांडुकपोतकास्ततः ॥१६॥
श्वेतोलूको बृहंश्चैव द्रोणकाकश्च कोकिलः ।
क्रौंचश्च वर्द्धनी चैव निपतंति गृहे यदि ॥१७॥
गृहे तस्य महोत्पातो भविष्यति न संशयः ।
स्थूलमङ्गप्रग्रहणं प्ररोहणमथापि वा ॥१८॥

हाराः कटकटायंते जातस्य दंतसम्भवः ।
हसता देवतानां च गात्रे स्वेदश्च जायते ।
सर्पमण्डूकप्रसवः कुंभे वापि क्वचिद्भवेत् ॥१९॥
निमित्तान्येवमादीनि जायंते यस्य वेश्मनि ।
षड्भिर्मासैश्च म्रियते गृहिणी च शुभा च या ॥२०॥
अशनिः पतते यत्र गृहे वज्रं च पादपे ।
शुक्ला वह्निस्फुलिंगाश्च तस्य विद्धि महद्भयम् ॥२१॥
खर्जूर उदरावर्ते निकोचगरलेऽपि च ।
फलिवृक्षे तिन्दुके च यत्र निर्जायते क्वचित् ॥२२॥
उद्याने देवगेहे च स्वगृहे चैत्यवृक्षके ।
कुर्यादादित्यवारे वा अयुतं तिलपायसम् ।
ततः शांतिर्भवेदाशु धेनुं दद्याच्च दक्षिणाम् ॥२३॥
पायसं तिलमुद्गौ च पुष्पं वा तालवृन्तकम् ।
इक्षुमोदकपिण्याकाञ्जुहुयाद्रविमुद्दिशन् ॥२४॥
सिंहासनं रथश्छत्रं ध्वजश्चामरभूषिते ।
अकस्माद्दृश्यते यत्र राज्ञो वान्यत्र कुत्रचित् ॥२५॥
नदयंति च सत्यस्योज्ज्वलनं स्त्रीपुरुषयोः ।
आगमस्य च दृष्ट्वैव भंगः कटकटायनम् ॥२६॥
उपरिष्टाद्भवेद्यस्य महोत्पातो भवेदयम् ।
चलत्वं चाधरस्यापि तथा कटकटायनम् ॥२७॥
रुदितं कोकिलस्यापि उलूकोप्यशुभं वदेत् ।
राजामात्यविनाशाय महीं च तत्सुतोऽपि वा ।
हस्तिनो मदयुक्ताश्च म्रियंते नात्र संशयः ॥२८॥
ताडीपूगादयो यत्र यमौ स्यातां प्रमादतः ।
गेही तत्र विनश्येत सदारः पुत्रसंयुतः ॥२९॥
बद्धपुष्पे यदा पुष्पं फलं वा यदि दृश्यते ।
अक्षतादर्शनात्तत्र सोमस्याद्भुतदर्शनम् ।
दधि मधु घृतं चैव जुहुयादयुतं द्विजाः ॥३०॥
पालाशं सोममुद्दिश्य सोमस्य च भवेद्दिने ।
इमंदेवा इति मंत्रेण सोमाय श्रपयेच्चरुम् ॥३१॥
उत्पतंति गृहे यस्य यवा माषाश्च पुष्कलाः ।
दधिक्षीराज्यपाकेषु रुधिरं दृश्यते यदि ॥३२॥
अकस्माद्गृहदाहस्तु अनग्निज्वलनं यथा ।
मेघहीना भवेद्विद्युद्रूपस्योद्गमनं तथा ॥३३॥
व्याधिलीना विनश्यंति निखिलाः पशुमानुषाः ।
एवं सर्वाणि भूतानि भवंत्यकारके ध्रुवम् ॥३४॥
राजामात्यविनाशाय गेहे गेही विनश्यति ।
प्राणनाशाय विप्रायाहुत्या च प्रभवंति हि ॥३५॥
दृष्ट्वा वाभद्रमत्युग्रं जुहुयादयुतं क्रमात् ।
दधिमधुघृतैर्युक्तं खादिरोदुम्बरेऽपि च ॥३६॥
अग्निर्मूर्द्धेति मंत्रेण श्रपितं लोहितं चरुम् ।
त्रिविप्रान्भोजयेद्दद्याद्दक्षिणां लोहितं ततः ।
स्वर्णमंगारमुद्दिश्य ततः शांतिः प्रजायते ॥३७॥
पुष्पं वा पातयेद्यत्र फलं वापि तथैव च ।
दध्यन्नं च घृतैर्मिश्रं रौप्यं हिरण्यमेव च ॥३८॥
हस्त्यश्वमहिषा गावो दारापत्यधनानि च ।
तुष्टेनांगारकेणैव सर्वमेतत्प्रदीयताम् ।
आंगारकेण मंत्रेण खादिरं चाक्षतैर्युतम् ॥३९॥
दक्षिणां च यथाशक्ति दद्याद्विप्राय वा पुनः ।
लोहितं च बलिं दद्यात्ततः संपद्यते शुभम् ॥४०॥
धावंति चोर्ध्वपुच्छाश्च गृहे गावः स्वयं यदि ।
आरोहंति गृहं विप्राः सारमेयाश्च सूकराः ॥४१॥
गृहे यस्य भवंत्येते तस्य भार्या विनश्यति ।
सर्वेषां वा भवेन्मृत्युर्वन्ध्या गौर्वा प्रजायते ॥४२॥
मिथ्यावादेन गेही च राज्ञा वादैश्च तिष्ठति ।
अथ वा यद्गृहे गावो नर्दयंति हसंति च ॥४३॥
धरणीहननं यत्र द्वयोरास्कंदनं तथा ।
निमित्तान्येवमादीनि गोश्वजातानि सत्तमाः ॥४४॥
यस्य गेहे भवंत्येते नाशस्तस्य भवेद्ध्रुवम् ।
मण्डूकसर्पकूष्मांडाः प्रसुवंति यथा स्त्रियः ॥४५॥
अकस्माद्यदि चैतानि बुधस्योत्पातलक्षणम् ।
शांतिं तत्र प्रवक्ष्यामि यथा संपद्यते सुखम् ॥४६॥
दधिमधुघृताक्तं च अपामार्गं तथा पुनः ।
अयुतं बुधवारे च जुहुयाच्छ्रद्धया युतः ॥४७॥
अंबकेति च मंत्रेण बुधाय श्रपयेच्चरुम् ।
सुवर्णं बुधमुद्दिश्य गां च दद्यात्पयस्विनीम् ॥४८॥
सुवर्णं पुष्पवृष्टिं च सुफलं चाक्षतं तथा ।
गृहे प्रांगणके यस्य निपतंति कदाचन ॥४९॥
अलंकारयुतां वापि सर्वाभरणभूषिताम् ।
गृहमध्ये तु यः पश्येत्क्षीणामंतर्हितां स्त्रियम् ॥५०॥
अकस्मान्मालतीपुष्पं जातं स्यात्तस्य वा गृहे ।
सोमाय न च संतुष्टः सर्वमेतत्प्रदृश्यते ॥५१॥

धनं धान्यं तथा पुत्र ऐश्वर्यं च वरस्त्रियः ।
सम्भृत्याश्च महिष्यश्च मरिष्यंति न संशयः ॥५२॥
श्रीश्चतेति च मन्त्रेण अपामार्गं तथा बुधः ।
सहस्रं बुधवारे च जुहुयाद् घृतसंयुतम् ॥५३॥
पयस्विनीं तथा गां च वासोयुगसमन्वितम् ।
द्विजाय श्रद्धया दद्यात्ततः संपद्यते शुभम् ॥५४॥
रक्तस्रावो भवेद्यत्र तत्र ऋत्विक्प्रसूयते ।
सिंहव्याघ्रगवादीनां धनहानिविपत्करः ॥५५॥
एको वृषस्त्रयो गावः सप्ताष्ट नव दंतिनः ।
संवत्सरेण तस्यैका प्रसूतिर्विहिता पुनः ॥५६॥
पुनः पुत्रंतं चाशु अकाले मैथुनं तथा ।
गावो यत्र प्रसूयंते यमौ दोषकराविमौ ॥५७॥
भग्नीकृतानि धान्यानि व्रीहयो यवतंडुलाः ।
ग्राविमार्जारमंडूकाः स्थूणाभंगे च प्राङ्गणे ॥५८॥
विकरंति नखैर्भूमिं प्ररोहंति ग्रहं तथा ।
गृहे यस्य प्रजायंते तस्य मृत्युर्न संशयः ॥५९॥
षण्मासाभ्यन्तरे यत्र श्मशानं यास्यति ध्रुवम्।
कलहं ज्ञातिवैरं च व्याधिपीडा भविष्यति ॥६०॥
विप्रलापो मित्रनाश इष्टेष्वनिष्टदर्शनम् ।
भार्यापुत्रविनाशश्च भवेदेषु विनिश्चितम् ॥६१॥
क्रियावंतं यदा कुर्वन्कुर्वीत गृध्रबिल्वके ।
तदा राज्ञां विभ्रमश्च तथा गृहविनाशनम् ॥६२॥
अमात्यवर्गाश्च पुरे राज्ञां राज्यपराङ्मुखाः ।
बृहस्पतिं समुद्दिश्य गां च दद्यात्पयस्विनीम् ॥६३॥
वारिमंडे च कूपे च वाप्यां च मधुकांजिके ।
क्षीरं दधिघृतं चैव जातं यदि भविष्यति ॥६४॥
अकस्मात्तत्र वृक्षश्च फलेन सह संयुतः ।
गृहमध्ये प्रजायेत ततः संतपद्यते शुभम् ॥६५॥
बृहस्पतेस्तु तुष्टस्य सर्वमेतन्निदर्शनम् ।
गौरं बृहस्पतेश्चैव प्रकुर्यात्प्रायदक्षिणाम् ॥६६॥
अशुभं हिशुभेनैव शांतिं होमं च कारयेत् ।
तत्रैव राक्षसं यत्र घटकं परिशोषणम् ॥६७॥
केसरी शर्करा तैलं राजतं तांडवं स्थितम् ।
माषभक्तं तथा धान्यं सुवर्णं रजतानि च ॥६८॥
ताम्रं कांस्यं तथा लोहं सीसकं पीत्तलं तथा ।
स्थापितानीव दृश्यंते गृहे चैतानि यस्य वै ॥६९॥

धननाशो भवेत्तस्य स्वर्ग भंगो ह्यथापि वा ।
व्याधिपीडे तथा घोरे राजोपद्रवबंधने ।
गजाश्वपशुभृत्यानां विनाशो जायते ध्रुवम् ॥७०॥
यस्यैतानि प्रदृश्यंते पर्वतः कनकानि च ।
संपत्तस्य प्रजायेत निश्चला सुखदा सदा ॥७१॥
दंतोत्तरेषु दंताश्च पंक्तिमाक्रम्य संस्थिताः ।
तेऽपि दोषकराः सर्वे शलाकाकृतिनस्तथा ।
उपदंताश्च सर्वे ते न ते दोषकराः क्वचित् ॥७२॥
भांडे कुंभे यदा चैव श्रूयते घनगर्जितम् ।
कंचुकानां गृहे चैव प्राकारः श्रूयते यदि ॥७३॥
मूषिकानां मुखे चैव ज्वलंती यस्य पश्यति ।
गेही तत्रैव नश्येत शुक्रस्याद्भुतदर्शनम् ॥७४॥
शांतिं तत्र प्रवक्ष्यामि यया संपद्यते शुभम् ।
शमीपत्रं निर्मितं च यवैर्युक्तं गृहिण्यपि ।
दधिमधुघृताक्तं च जुहुयाद्भार्गवे दिने ॥७५॥
शुक्लवासोयुगं चैव गां च शुक्लां पयस्विनीम् ।
सुवर्णं श्रद्धया चैव दद्याद्विप्राय दक्षिणाम् ॥७६॥
देवागरे यदा भूमिर्लोहिता यस्य दृश्यते ।
पुष्पिता दृश्यते लोके तत्र विद्धि महद्भयम् ॥७७॥
राजा वा राजपुत्रो वा राज्यं वापि विनश्यति ।
मंत्रिणो मंत्रिपुत्राश्च म्रियंते नात्र संशयः ॥७८॥
यत्र वा दृश्यते लोके गृहे यस्य सुपूजिताः ।
पुष्पिताश्च गृहस्तंभाः शरीरं च घटस्तथा ॥७९॥
हस्त्यश्वमहिषाश्चैव अजा गात्रस्तथैव च ।
नित्यं स्वामिवधार्थाय पुष्पितां प्रवहंति च ॥८०॥
गृहे हंसो गृहे सम्यङ्मण्डूका जलचारिणः ।
द्वारे प्रविश्य सर्पश्च प्रतिमायाः प्रकल्पनम् ॥८१॥
अकस्माद्घटशब्दोपि यत्र कुत्रापि जायते ।
स्रवंति प्रमदा यत्र भिन्नास्ते स्युर्नवांगिकाः ॥८२॥
गृही तत्र विनश्येत सपुत्रपशुबांधवः ।
धनुःखड्गधरा रात्रौ मध्याह्ने चान्द्रके तथा ॥८३॥
उदितो दृश्यते व्योम्नि ज्वलितः पावकस्तथा ।
मनुष्याङ्गनानां मरणं तथाद्राष्ट्रविप्लवः ॥८४॥
रससिद्धानि वस्तूनि सुराश्चापि वा पुनः ।
हस्तिनो मदयुक्ताश्च अश्वाधीरितहिंसकाः ।
विनश्यंति सदा चैते शनेरद्भुतदर्शने ॥८५॥

नगरे वा तथा ग्रामे जायन्ते तस्य वैरिणः ।
दिवा वा यदि वा रात्रौ शनेरद्भुतदर्शनम् ॥८६॥
मृगव्याघ्रादिरक्षांसि तथा गोमहिषा अपि ।
उत्पतंति यदा चैते शनेरद्भुतमादिशेत् ॥८७॥
निविमंत्रं प्रवक्ष्यामि येन संपद्यते शुभम् ।
जुहुयादयुतं सम्यक्सस्यांश्च समिधं द्विजाः ॥८८॥
शन्नो देवीति मंत्रेण शुभार्थं शनिवासरे ।
चरुं च श्रपयेत्तत्र समुद्दिश्य शनैश्चरम् ॥८९॥
गां च नीलां ततो दद्याज्जीवद्वत्सां पयस्विनीम् ।
वासोयुगं च विप्राय सुवर्णं रजतं तथा ॥९०॥
दत्त्वा तु श्रद्धया सम्यग्दक्षिणां शिरसि स्थिताम्।
विधिं होमावसाने तु ततः संपद्यते शुभम् ॥९१॥
यदा द्वारे गोधिका च शांखिनी प्रविशेद्गृहम् ।
तदाऽशुभं विजानीयाद्राजपीडा धनक्षयः ।
अयुतं जुहुयात्सम्यक्ततः संपद्यते शुभम् ॥९२॥
विना गर्जितमेघेन शिलावृष्टिः प्रजायते ।
रक्तमिश्रा हि पांडुश्च पतन्ती यत्र दृश्यते ॥९३॥
तत्र संदृश्यते चाभ्रं वृक्षा वातविवर्जिताः ।
शक्रध्वजस्तथा चापं पतनं सुमनस्य च ॥९४॥
दिवा शिवा पुरा रौति उलूको वा निशाचरः ।
निशि निपत्य काकुत्स्थे प्रदेशे रौति वा वृषः ॥९५॥
अधर्मप्रबला देशा राजा धर्मपराङ्मुखः ।
अन्योन्यं च जिघांसंति गोब्राह्मणमथापि वा ॥९६॥
गृहे गृही विनश्येच्च सपुत्रपशुबांधवः ।
उत्सानं द्वारदेशेऽस्य मरणं राष्ट्रविभ्रमः ॥९७॥
राज्यनाशो भवेद्राज्ञो मरणं वाहनस्य च ।
विपरीतानि देशानि क्रमतः संभवंति हि ॥९८॥
राहुणा ग्रस्तसूर्योऽपि निशि चाथ यदा दिवा ।
तारकागणवच्चैव राज्ञां निधनकारकः ॥९९॥
सहामात्या विनश्यंति स्वर्गे ये च सुदुर्जयाः ।
परचक्रेण पात्यंते राजानो नात्र संशयः ॥१००॥
छायाध्वजश्चगगने दृश्यते चेत्कदान ।
दर्शनादेव राज्ञस्तु विनाशः सहराष्ट्रकैः ॥१०१॥
ज्वलितो दृश्यते यत्र पावकश्च सकृज्जले ।
वज्रे शिरसि गात्रे वा जीवितं तस्य दुर्लभम् ॥१०२॥
द्वारोपांते तथा स्तंभे अग्निर्वा धूम एव वा ।
पुरुषस्य तु तत्रैव मरणं जायते ध्रुवम् ॥१०३॥
गगनेऽशनिघातश्च शक्तिहस्तेन वा पुनः ।
अब्दस्याभ्यंतरे तस्य मरणं नात्र संशयः ॥१०४॥
शिखावलयमध्ये तु सधूमः पावकोद्गमः ।
दृश्यते नगरे मध्ये तत्रैवाद्भुतदर्शनम् ॥१०५॥
शवस्य नीयमानस्य उत्थानं वा प्रमादतः ।
स्थापितस्य च लिंगस्य अन्यत्र गमनं तथा ॥१०६॥
निर्घातश्चापि भूकंपो निवातोल्काप्रदर्शनम् ।
अकाले पुष्पिता वृक्षाः फलं चाकालसंभवम् ॥१०७॥
अनिमित्तानि सर्वाणि दूरमागत्य निर्भरम् ।
अनिमित्तस्य नाशो यः संहिकेयकृतस्य च ॥१०८॥
नराणामासनं चैव गवां वा मानुषीगिरा ।
पक्षमात्रांतरे तस्य पुत्रस्य मरणं दिशेत् ॥१०९॥
अयुतं जुहुयात्तत्र राहुमुद्दिश्य यत्नतः ।
शांतिमत्र प्रवक्ष्यामि यथा संपद्यते शुभम् ॥११०॥
दधिमधुघृताक्तं च कुर्याद्दूर्वाक्षतं तथा ।
कलायु इति मन्त्रेण जुहुयाद्रविवासरे ॥१११॥
चरुं च श्रपयेत्तत्र राहुमुद्दिश्य संश्रयात् ।
होमं कुर्यात्ततो गां च कपिलां च पयस्विनीम् ॥११२॥
अतसीं तिलशंखौ वा वासोयुगमथापि वा ।
श्रद्धया राहुमुद्दिश्य दद्याद्विप्राय दक्षिणाम् ॥११३॥
दुरितस्य विनाशाय तस्य संपद्यते शुभम् ।
दधिमधुघृतक्षीरेण वारुणेन च वारुणे ॥११४॥
दृश्यते चाद्भुतं तेषु विशिष्टै र्दोषदर्शिभिः ।
गृही तत्र विनश्यश्च भवेत्सपशुबांधवः ॥११५॥
दृश्यंते तत्र क्रौंचाश्च जंबुका गृध्रवायसाः ।
दारुणं भीषणं घोरं नृत्यंति च हसंति च ॥११६॥
मैथुनानि च सर्वेषां यस्य वासे भवेद्यदि ।
मृत्युस्तस्य भवेदाशु ईश्वरस्य च शासनात् ॥११७॥
धूमकेतुर्यदा व्योम्नि ज्वलत्पावकसन्निभः ।
स्थानात्स्थानांतरं याति भूमौ वा पतते भृशम् ।
सबंधुरस्यते राजा परचक्रैः स पीडितः ॥११८॥
दुर्भिक्षं मरणं चैव चिरं राष्ट्रे भविष्यति ।
गावो मर्कटकुंभा व विशंते गृहवेश्मनि ॥११९॥
गावश्च तस्य नश्यंति दारापत्यधनानि च ।
अन्नस्य दोषो भवति गृहे यांति प्रमादतः ॥१२०॥

---

१ दद्रीतेति शेषः ।

अब्दांतरे भवेन्मृत्युर्विरजा हि भविष्यति ।
शांतिमत्र प्रवक्ष्यामि यथा संपद्यते शुभम् ॥१२१॥
सप्ताश्वरथसंयुक्तं हेमच्छत्रविभूषितम् ।
विप्राय मंडपं दद्याद्विल्वपत्रमथापि वा ॥१२२॥
ऐंद्रेणैव तु मन्त्रेण होमः कार्यो द्विजातिभिः ।
अकस्माच्छालतालाक्षखदिरोत्पलसेरकाः ॥१२३॥
गृहमध्ये प्रजायेत् केतरोरद्भुतदर्शनम् ।
हंसो वा द्रोणकाको वा मयूरो गृहोपरि ॥१२४॥
गृहे तस्य महोत्पातः केतोरद्भुतदर्शनम् ।
शांतिमत्र प्रवक्ष्यामि यथा संपद्यते शुभम् ॥१२५॥
दधिमधुघृताक्तं च जुहुयादयुतं कुशम् ।
त्र्यंबकं चेति मन्त्रेण केतवेभिर्वपेच्चरुम् ॥१२६॥
नीलां धेनुं सवत्सां च बहुक्षीरप्रदां तथा ।
मृत्तिकां हेमवासश्च नानालंकारमेव च ॥१२७॥
दक्षिणां च प्रवक्ष्यामि यस्य नास्ति प्रतिक्रिया ।
देवमुद्दिश्य दानेन होमेन चरुणा तथा ॥१२८॥
दक्षिणस्यां दिशि च्छायां यः पश्येदात्मनः स्वयम् ।
स्वच्छायां पादुकस्यैव पश्येत्पश्चशिरोद्भयम् ॥१२९॥
एवमेवैव यच्छिन्नं शिनष्टि च ततो हितम् ।
शीघ्रं नाशमवाप्नोति सप्ताहान्नात्र संशयः ॥१३०॥
उच्चावचान्प्रवक्ष्यामि यथा शास्त्रेण चोदितम् ।
काकमार्जारशूकानां कपोतानां विशेषतः ।
मैथुनं दृश्यते यत्र तच्च राहोर्महाद्भुतम् ॥१३१॥
शनि मुद्दिश्य जुहुयादयुतं शनिवासरे ।
पूजयेदर्कपुष्पेण शतेन जुहुयाच्चरुम् ॥१३२॥
कृत्वा तत्रैव पश्येतशनेरद्भुत दर्शनम् ।
अष्टाविंशं चरुं कृत्वा ततः शांतिर्भवेद्ध्रुवम् ॥१३३॥
भुजपदोस्तथा चक्षुःस्पंदने मरणं दिशेत् ।
तत्तु सोमाद्भुतं विद्याद्वामदक्षिणतः क्रमात् ॥१३४॥
कृष्णपक्षे भवेद्वामे विपरीतेऽद्भुतं दिशेत् ।
अनिष्टसूचकं यस्मात्तस्माच्छांतिं प्रकल्पयेत् ॥१३५॥
शतार्द्धं रविमुद्दिश्य शान्त्यर्थे होममाचरेत् ।
चरुपाकविधानेन यवैस्तिलसुसर्पिषा ॥१३६॥
पुस्तके यज्ञसूत्रं च असतपात्रे चरौ तु वा ।
शक्रवस्त्रप्रदग्धे च सूर्यस्याद्भुतदर्शनम् ॥१३७॥
हयमारं त्रिमध्वक्तं जुहुयादिष्टसिद्धये ।
देवपुस्तकरत्नानि मणिकांचनमेव च ॥१३८॥

लोहितस्याद्भुतं विद्यात्सहस्रं च विशोधनम् ।
देवागारे तथा गोधा शंखिनी प्रविशेत्क्वचित् ॥१३९॥
द्रोणकाको बकश्चैव उलूकद्वयमेव च ।
रक्तकंठः कपोतश्च व्याघ्र एणश्च वा विशेत् ॥१४०॥
यस्य देवगृहं पश्येत्तस्य तस्यायुतं हुनेत् ।
न चात्र गृहवैकृत्यं हसनं यदि दृष्यते ।
संपत्तिसूचकं गेहे मरणं दुःखदर्शनम् ॥१४१॥
क्रंदने हतराज्येन गजाश्ववाहने क्वचित् ।
सूर्यमुद्दिश्य जुहुयादयुतं सर्वसिद्धये ॥१४२॥
प्रमादात्कंपने हानिः स्वेदे जाते विपद्भवेत् ।
क्षीरस्रावे च रुधिरं तत्र राज्ये महद्भयम् ॥१४३॥
गोच्छागौ वाथ गोमायुर्गृहोपरि प्रनृत्यति ।
यदा रौति दिवा फेरुस्तदा नाशो भवेद्ध्रुवम् ॥१४४॥
श्वजंबुकावथ व्याघ्रो यथाशक्ति च धावति ।
ईशाने महिषस्तद्वत्तदा देशे च विप्लवः ॥१४५॥
राहोरद्भुतमुद्दिश्य सहस्रं जुहुयाच्चरुम् ।
वृक्षाद्भुतं यदा पश्येत्तत्र तस्यां परित्यजेत् ।
यद्गृहेषु हुतं याति देशविप्लवमादिशेत् ॥१४६॥
देशे वा नगरे ग्रामे आरण्यपशुबन्धनम् ।
सर्पे वा विपरीतं च मांसपिंडमथापि वा ।
तद्गृहे मरणं चैव देश विप्लवमादिशेत् ॥ १४७ ॥
दिवाद्भुतेऽयुतं रात्रौ द्विगुणं च भवेद्ध्रुवम् ।
द्विगुणं चापि संध्यायामर्धरात्रे चतुर्गुणम् ॥१४८॥
अकाले तत्र मरणमकाले गृहिणीमृतिः ।
सौराद्भुतं विजानीयादशुभे वा विशोधनम् ॥१४९॥
एकैकस्यायुतं यत्र कुर्यात्तत्रैव होमयेत् ।
सांगोपांगेन सहित मष्टावष्टौ हुतं च वा ॥१५०॥
अधिप्रत्यधिसहितं गृहपक्षेऽपि सत्तमाः ।
तन्मानेन हुतं विप्रा कुर्यात्तत्रैव भूषणम् ॥१५१॥
एकैकस्याहुतं विप्रा अष्टावष्टौ हुतं च वा ।
अधिप्रत्यधिदेवानां याश्चान्याश्चांगदेवताः ॥१५२॥
मानांते च ददेत्पूर्णां दत्वा पूर्णां न होमयेत् ।
वक्ष्ये ग्रहमखे मानं येन मानेन सिध्यति ॥१५३॥
अमानकरणे दोषस्तस्मान्मानं न हापयेत् ।
पंक्तिचत्वारिंशदाद्यैश्चतुर्धा विभजेन्नरः ॥१५४॥
अनिष्टाय ततो दद्याच्चरुहोमं विभागशः ।
अधिप्रत्यधिदेवानामष्टावष्ट ह्युदाहृतम् ॥१५५॥

त्र्यंबकादिषु मंत्रेषु होमत्रयमुदाहृतम् ।
धनंजये तथा दद्याच्चरुहोमं विभागतः ॥१५६॥
आदित्यायाष्टावष्टावधिकं कल्पयेत्सुधीः ।
शतहोमे तु सर्वत्र दशांगं कल्पयेन्नरः ॥१५७॥
अनिष्टाय युगांगं तु ग्रहेभ्यो ह्यंगनाय च ।
अधिप्रत्यधिदेवानां तथैवांगं प्रकल्पयेत् ॥१५८॥
द्वौ तु दद्यात्र्यंबकाय तथा धनंजयाय च ।
तत्र होमो नायकाय सर्वत्रैव विचक्षणः ॥१५९॥
सहस्रे चैव विंशांगे अनिष्टाय दशांशकम् ।
पञ्चांशेन ग्रहणां च पञ्चांशेन यवानपि ॥१६०॥
तत्रानिष्टे पंचशतं तस्यार्धं ग्रहवाग्यतः ।
एकत्रिंशद्भवेन्मानम् ( ३१ )
अन्येषां तु चतुर्दश ( १४ ) ॥१६१॥
ग्रहाधिकं होमयुगं तत्र भागे प्रकल्पयेत् ।
अधातये च तिथ्यंगं पञ्चांगं यस्य चाद्भुतम् ॥१६२॥
ग्रहेभ्यश्चैव पंचांगं तत्र वांगं परानपि ।
एकैकांगे भवेन्मानं षट्शतं षष्टिरेव च ॥१६३॥
अधिकं च भवेत्षष्टिर्दशमं भागशेषतः ।
अनिष्टांशे त्रिसहस्रं त्रिशतं त्रिंशतं तथा ॥१६४॥
चतुःशतं ग्रहाणां च तथा सप्तशताधिकम् ।
उपग्रहेभ्यो दद्याच्च पंचाशीत्यधिकं शतम् ॥१६५॥
तिथ्यंगभागः शेषेण ग्रहे सप्तशताधिकम् ।
एकैकं तु ग्रहस्यैवमादित्याय युगं भवेत् ॥१६६॥
ग्रहांगे यः स्थितो भागो युगलं भागशेषतः ।
त्र्यंबकाय च तद्दद्यात्तथा धनंजयाय च ॥१६७॥
शांतिके पौष्टिके काम्ये यदीच्छेत्सुखमात्मनः ।
ग्रहाणां चायुतं होमं त्र्यहसाध्येन होमयेत् ॥१६८॥
त्र्यहसाध्ये विधानं यत्पुरैवोदीरितं द्विजाः ।
इदानीं प्रक्रमेणैव यो भागः स निगद्यते ॥१६९॥
पूर्वस्मिन्दिवसेऽनिष्टे सहस्रं त्रिशतोत्तरम्
( १३०० ) । इतरेषां ग्रहाणां च प्रत्येकं
तु शतं शतम् ( १०० ) ॥१७०॥
अधिप्रत्यधिदेवानां पंचाशद्धोम उच्यते ।
प्रथमेह्नि प्रदद्याच्च मिलित्वा त्रिसहस्रकम् ३००० ॥१७१॥
द्वितीयदिवसेऽनिष्टे द्विसहस्रमुदाहृतम् (२०००)
प्रतिग्रहेभ्यस्त्रिशतं दद्यादष्टशताधिकम् (१०८) ॥१७२॥
उपग्रहेभ्यो दद्याच्च षोडशेभ्यो यथाक्रमम् ।
एकाशीतिं ददौ यत्नादशीतिं चांत्ययोर्द्वयोः ॥१७३॥
एवं द्वितीयदिवसे मिलित्वा षट्सहस्रकम्
( ६००० ) । अनिष्टाय त्रिशतं
तु तृतीयदिवसे मतम् ॥१७४॥
तत्प्रत्येकं ग्रहाणां च द्वाचत्वारिंशदुच्यते ।
अधिप्रत्यधिदेवानां प्रत्येकं पंचत्रिंशकम् ॥१७५॥
तृतीयदिवसे दद्यान्मिलित्वैकसहस्रकम् (१०००)
आदित्याय युगं दद्यादेकं तु त्र्यंबकाय च ॥१७६॥
धनंजयाय होमैकमेकं चायुतमुच्यते ।
तदर्धकं ग्रहेभ्यश्च इतरेभ्यस्तदर्धकम् ॥१७७॥
ग्रहाणां त्रिसहस्रं तु पंचानां च सहस्रकम् ।
त्रिसहस्रं भागशेषमादित्याय सहस्रकम् ॥१७८॥
त्र्यंबकाय तथादद्यात्तथा धनंजयाय च ।
षट्पादाधिक षट्षट्कसहस्रपरिसंख्यया ।
नवश्लोकशतोद्भूतं संपूर्णं स्याद्भविष्यकम् ॥१७९॥

इति श्रीभविष्ये महापुराणे मध्यमपर्वणि तृतीयभागे विंशोऽध्यायः ॥ २० ॥

इति तृतीयभागः समाप्तः ॥ इति श्रीभविष्ये महापुराणे मध्यमपर्व समाप्तम् ॥

**श्रीवेंकटेश्वरार्पणमस्तु**

श्रीगणेशाय नमः

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

# भविष्य महापुराणम्

## प्रतिसर्गपर्व

( प्रथमखण्डः )

☆

## प्रथमोऽध्यायः

### मंगलाचरणपूर्वकं प्रश्ने सूतेन सुदर्शनान्तनरपतिराज्यकालवृत्तांतवर्णनम्

शौनक उवाच

भविष्याख्ये महाकल्पे ब्रह्मायुषि परार्द्धके ।
प्रथमेऽब्देह्नि तृतीये प्राप्ते वैवस्वतेऽन्तरे ॥ १ ॥
अष्टाविंशे सत्ययुगे के राजानोऽभवन्मुने ।
तेषां राज्यस्य वर्षाणि तन्मे वद विचक्षण ॥ २ ॥

सूत उवाच

कल्पाख्ये श्वेतवाराहे ब्रह्माब्दस्य दिनत्रये ।
प्राप्ते सप्तमुहूर्ते च मनुर्वैवस्वतोऽभवत् ॥ ३ ॥
स तप्त्वा सरयूतीरे तपो दिव्यं शतं समाः ।
तच्छिक्कातोऽभवत्पुत्र इक्ष्वाकुः स महीपतिः ॥ ४ ॥
ब्रह्मणो वरदानेन दिव्यं यानं स आप्तवान् ।
नारायणं पूजयित्वा हरौ राज्यं निवेद्य च ॥ ५ ॥
षट्त्रिंशच्च सहस्राणामब्दं राज्यं तदाऽकरोत् ।
तस्माज्जातो विकुक्षिश्च शतहीनं तदब्दकम् ॥ ६ ॥
राज्यं कृत्वा दिवं यातस्तस्माज्जातो रिपुंजयः ।
शतहीनं कृतं राज्यं तत्ककुत्स्थसुतः स्मृतः ॥ ७ ॥
शतहीनं कृतं राज्यं ततोऽनेनास आत्मजः ।
शतहीनं कृतं राज्यं तस्माज्जातो नृपः पृथुः ॥ ८ ॥
शतहीनं कृतं राज्यं विष्वगश्वश्च तत्सुतः ।
शतहीनं कृतं राज्यं तस्मादार्द्रो नृपोऽभवत् ॥ ९ ॥
शतहीनं कृतं राज्यं भद्राश्वस्तत्सुतोऽभवत् ।
शतहीनं कृतं राज्यं युवनाश्वस्तु तत्सुतः ॥१०॥
शतहीनं कृतं राज्यं श्रवस्थस्तत्सुतोऽभवत् ।
सत्यपादश्च संजातः प्रथमो भारतेऽन्तरे ॥११॥
उदयादस्तपर्यंतं तैर्नृपैर्भूमिमंडलम् ।
भुक्तं नीतिपरैर्देवैः श्रवस्थेन तु भूतले ।
शतहीनं कृतं राज्यं बृहदश्वस्ततोऽभवत् ॥१२॥
शतहीनं कृतं राज्यं तस्मात्कुवलयाश्वकः ।
शतहीनं कृतं राज्यं दृढाश्वस्तत्सुतोऽभवत् ॥१३॥
सहस्रहीनं राज्यं तत्तस्मात्पुत्रो निकुंभकः ।
सहस्रहीनं राज्यं तत्संकटाश्वस्तु तत्सुतः ॥१४॥
सहस्रहीनं राज्यं तत्तस्माज्जातः प्रसेनजित् ।
सहस्रहीनं राज्यं तद्रवणाश्वस्तु तत्सुतः ॥१५॥
सहस्रहीनं राज्यं तन्मांधाता तत्सुतोऽभवत् ।
शतहीनं कृतं राज्यं पुरुकुत्सस्तु तत्सुतः ॥१६॥
शतहीनं कृतं राज्यं त्रिशदश्वस्तु तत्सुतः ।
रथे यस्य स्मृता वाहा वाजिनस्त्रिंशतो वराः ॥१७॥
अनरण्यस्ततो जातो ह्यष्टाविंशत्सहस्रकम् ।
राज्यं द्वितीयचरणे स्मृतं सत्ययुगस्य वै ॥१८॥
पृषदश्वस्ततो जातो राज्यं षष्ठसहस्रकम् ।
तदब्दं भूतले कृत्वा पितृलोकमुपाययौ ॥१९॥
हर्यश्वस्तु ततो जातो विष्णुभक्तकुले नृपः ।
सहस्रहीनं राज्यं तत्तत्सुतो वसुमान्स्मृतः ॥२०॥
सहस्रहीनं राज्यं तत्त्रिधन्वा तनयस्ततः ।
सहस्रहीनं राज्यं तत्तेन राज्ञा च सत्कृतम् ॥२१॥
सत्यपादः समाप्तोऽयं द्वितीयो भारतेऽन्तरे ।
त्रिधन्वनश्च नृपतेस्त्रपारण्यस्तु वै सुतः ॥२२॥

---

१ चैव-इ० पा० । २ 'शतहीनम्, सहस्रहीनम्, इत्यनेन प्रतिस्थानतः 'षट्त्रिंशच्च सहस्राणाम्' इत्यारभ्यानुक्रमेण हीनत्वं ज्ञेयम् ।

सहस्रहीनं राज्यं तत्कृत्वा स्वर्गमुपाययौ ।
तस्माज्जातस्त्रिशंकुश्च राज्यं वर्षसहस्रकम् ॥२३॥
छद्मना हीनतां जातो हरिश्चंद्रस्तु तत्सुतः ।
राज्यं विंशत्सहस्रं च रोहितो नाम तत्सुतः ॥२४॥
पितुस्तुल्यं कृतं राज्यं हारीतस्तनयोऽभवत् ।
पितुस्तुल्यं कृतं राज्यं चंचुभूपश्च तत्सुतः ॥२५॥
पितुस्तुल्यं हि राज्यं तद्विजयो नाम तत्सुतः ।
पितुस्तुल्यं हि राज्यं तद्रुरुकस्तनयस्ततः ॥२६॥
पितुस्तुल्यं कृतं राज्यं सगरस्तनयोऽभवत् ।
भूपाश्च बाहुसेनान्ता वैष्णवाः परिकीर्तिताः ॥२७॥
राज्यमानं कृतं सम्यग्भूपैर्वैवस्वतादिभिः ।
मणिस्वर्णसमृद्धिश्च बह्वन्नं बहुदुग्धकम् ॥२८॥
पूर्णो धर्मस्तदा भूम्यां मुने सत्ययुगस्य वै ।
तृतीयचरणे मध्ये सगरो नाम भूपतिः ॥२९॥
शिवभक्तः सदाचारस्तत्पुत्राः सागराः स्मृताः ।
त्रिंशत्सहस्रवर्षं तद्राज्यं वै मुनिभिः स्मृतम् ॥३०॥
नष्टेषु सागरेष्वेवमसमञ्जस आत्मजः ।
शतहीनं कृतं राज्यमंशुमांस्तत्सुतोऽभवत् ॥३१॥
शतहीनं कृतं राज्यं दिलीपस्तत्सुतोऽभवत् ।
शतहीनं कृतं राज्यं तस्माज्जातो भागीरथः ॥३२॥
शतहीनं कृतं राज्यं श्रुतसेनस्ततोऽभवत् ।
शतहीनं कृतं राज्यं नाभागस्तनयस्ततः ॥३३॥
शतहीनं कृतं राज्यमम्बरीषस्ततोऽभवत् ।
शैवाः षट् श्रुतसेनान्ता नाभागो वैष्णवो नृपः ॥३४॥
सत्यपादः समाप्तोऽयं तृतीयो भारतेंतरे ।
अंबरीषेण भूपेन शतहीनं कृतं पदम् ॥३५॥
चतुर्थे चरणे तस्य चाष्टादश सहस्रकम् ।
अब्दं राज्यं शुभं ज्ञातं कर्मभूम्यां च भारते ॥३६॥
एकोनत्रिंशद्वर्षाणि राज्यं तात्रिंशतानि च ।
शतहीनं कृतं राज्यं सिंधुद्वीपोऽम्बरीषजः ॥३७॥
शतहीनं कृतं राज्यमयुताश्वस्ततोऽभवत् ।
शतहीनं कृतं राज्यमृतुपर्णस्तु तत्सुतः ॥३८॥
शतहीनं कृतं राज्यं सर्वकामो नृपस्ततः ।
शतहीनं कृतं राज्यं नृपः कल्माषपादकः ॥३९॥
शतहीनं कृतं राज्यं सुदासस्तनयोऽभवत् ।
तस्मादश्मकश्चैव मदयन्त्या वशिष्ठजः ॥४०॥
शतहीनं कृतं राज्यं हरिवर्मा ततोऽभवत् ।
सप्त भूपाः सुदासान्ता वैष्णवाः परिकीर्तिताः ॥४१॥
गुरुशापात्तु सौदासो राज्याङ्गं गुरवेऽर्पयत् ।
गोकर्णलिंगभक्तश्च शैवः समय उच्यते ॥४२॥
हरिवर्मा शमकजो वैश्यवत्साधुपूजकः ।
ऊनत्रिंशत्सहस्राणि तथा सप्तशतानि वै ॥४३॥
हरिवर्माऽकरोद्राज्यं तस्माद्दशरथोऽभवत् ।
पितुस्तुल्यं कृतं राज्यं तस्माद्दिलीपस्सुतः ॥४४॥
पितुस्तुल्यं कृतं राज्यं भूपो विश्वासहस्ततः ।
राज्यं दशसहस्रं तन्नियज्ञः प्राकृतो नृपः ॥४५॥
तदधर्मप्रतापेन ह्यनावृष्टिस्तदाऽभवत् ।
शतवर्षमना वृष्टिस्सर्वराज्यं व्यनाशयत् ॥४६॥
यज्ञं कृत्वा वशिष्ठस्तु राज्ञीवचनतत्परः ।
यज्ञात्खट्वांग उत्पन्नः खट्वांगं शस्त्रमुद्वहन् ॥४७॥
इन्द्रसाहाय्यमगमद्राज्यं त्रिंशत्सहस्रकम् ।
कृत्वा तत्र वरं लब्ध्वा देवेभ्यो मुक्तितां गतः ॥४८॥
खट्वांगाद्दीर्घबाहुश्च राज्यं विंशत्सहस्रकम् ।
तस्मात्सुदर्शनो जातो देवीपूजनतत्परः ॥४९॥
वैष्णवा दाशरथ्यं तास्त्रयो विख्यातसद्बलाः ।
खट्वांगो दीर्घबाहुश्च वैष्णवौ परिकीर्तितौ ॥५०॥
सुदर्शनो महाप्राज्ञः काशीराजसुतः नृपः ।
उद्वह्य भूपतीञ्जित्वा देवीसेवाप्रसादतः ॥५१॥
राज्यं भरतखण्डान्त मदधद्धर्मतो नृपः ।
वर्षपञ्चसहस्राणि राज्यं चक्रे स भूपतिः ॥५२॥
स्वप्नमध्ये वचः प्रोक्तं महाकाल्या नृपाय वै ।
वत्स त्वं प्रियया सार्द्धं वशिष्ठादिभिरन्वितः ॥५३॥
हिमालयं गिरिं प्राप्य वासं कुरु महामते ।
महावायुप्रभावेन क्षयो भरतखंडके ॥५४॥
रत्नाकरः पश्चिमोऽब्धिस्तस्य द्वीपाः क्षयं गताः ।
महोदधिः पूर्वतोऽब्धिस्तस्य द्वीपाः क्षयं गताः ॥५५॥
वाडवोऽब्धिर्दक्षिणे च तस्य द्वीपाः क्षयं गताः ।
हिमाब्धिरुत्तरे तस्य सगरैः खनितो हि सः ॥५६॥
ये द्वीपास्तु सुविख्यातास्तेऽपि सर्वे लयं गताः ।
भारतो वर्ष एवासौ वत्सरे सप्तमेऽहनि ॥५७॥

श्रीगणेशाय नमः

# प्रतिसर्ग पर्व

## ( तृतीय खण्डः )

★

## प्रथमोऽध्यायः

### सूतेनशौनकादीन्प्रति जायमानैतिहासिकवृत्तान्तवर्णनम्

ऋषयः ऊचुः

भगवन्विक्रमाख्यानकालोऽयं भवतोदितः ।
शतद्वादशमर्यादो द्वापरस्य समो भुवि ॥ १ ॥
अस्मिन्काले महाभाग लीला भगवता कृता ।
तामेतां कथयास्मान्वै सर्वज्ञोऽस्ति भवान्सदा ॥ २ ॥

सूत उवाच

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ३ ॥
भविष्याख्ये महाकल्पे प्राप्ते वैवस्वतेन्तरे ।
अष्टाविंशद्वापरान्ते कुरुक्षेत्रे रणोऽभवत् ॥ ४ ॥
पांडवैर्निर्जिताः सर्वे कौरवा युद्धदुर्मदाः ।
अष्टादशे च दिवसे पांडवानां जयोऽभवत् ॥ ५ ॥
दिनान्ते भगवान्कृष्णो ज्ञात्वा कालस्य दुर्गतिम् ।
शिवं तुष्टाव मनसा योगरूपं सनातनम् ॥ ६ ॥

कृष्ण उवाच

नमः शांताय रुद्राय भूतेशाय कपर्दिने ।
कालकर्त्रे जगद्भर्त्रे पापहर्त्रे नमोनमः ॥ ७ ॥
पांडवान्रक्ष भगवन्मद्भक्तान्भूतभीरुकान् ।
इति श्रुत्वा स्तवं रुद्रो नंदियानोपरि स्थितः ।
रक्षार्थं शिविराणां च प्राप्तवाञ्छूलहस्तधृक् ॥ ८ ॥
तदा नृपाज्ञया कृष्णः स गतो गजसाह्वयम् ।
पांडवाः पंच निर्गत्य सरस्वत्या स्तटेऽवसन् ॥ ९ ॥
निशीथे द्रौणिभोजौ च कृपस्तत्र समाययुः ।
तुष्टुवुर्मनसा रुद्रं तेभ्यो मार्गं शिवोददात् ॥१०॥
अश्वत्थामा तु बलवाञ्छिवदत्तमसिं तदा ।
गृहीत्वा स जघानाशु धृष्टद्युम्नपुरःसरान् ॥११॥
हत्वा यथेष्टमगमद्द्रौणिस्ताभ्यां समन्वितः ॥१२॥
पार्षतस्यैव सूतश्च हतशेषो भयातुरः ।
पांडवान्वर्णयामास यथा जातो जनक्षयः ॥१३॥
आगस्कृतं शिवं ज्ञात्वा भीमाद्याःक्रोधमूर्च्छिताः ।
स्वायुधैस्ताडयामास देवदेवं पिनाकिनम् ॥१४॥
अस्त्रशस्त्राणि तेषां तु शिवदेहे समाविशन् ।
दृष्ट्वा ते विस्मिताः सर्वे प्रजघ्नुस्तलमुष्टिभिः ॥१५॥
तान्छशाप तदा रुद्रो यूयं कृष्णप्रपूजकाः ।
अतोऽस्साभी रक्षिणीया वधयोग्याश्च वै भुवि ॥१६॥
पुनर्जन्म कलौ प्राप्य भोक्ष्यते चापराधकम् ।
इत्युक्त्वान्तर्दधे देवः पांडवा दुःखितास्तदा ॥१७॥
हरिं शरणमाजग्मुरपराधनिवृत्तये ।
तदा कृष्णयुताः सर्वे पांडवाः शस्त्रवर्जिताः ॥१८॥
तुष्टुवुर्मनसा रुद्रं तदा प्रादुरभूच्छिवः ।
वरं वरयत प्राह कृष्णः श्रुत्वाब्रवीदिदम् ॥१९॥
शस्त्राण्यस्त्राणि यान्येव त्वदंगे क्षपितानि वै ।
तांडवेभ्यश्च देहि त्वं शापस्यानुग्रहं कुरु ॥२०॥
इति श्रुत्वा शिवः प्राह कृष्णदेव नमोऽस्तु ते ।
अपराधो न मे स्वामिन्मोहितोऽहं तवाजया ॥२१॥
तद्वशेन मया स्वामिन्दत्तः शापो भयंकरः ।
नान्यथा वचनं मे स्यादंशावतरणं भवेत् ॥२२॥
वत्सराजस्य पुत्रत्वं गमिष्यति युधिष्ठिरः ।
बलखानिरिति ख्यातः शिरीषाख्यपुराधिपः ॥२३॥
भीमो दुर्वचनादुष्टो म्लेच्छयोनौ भविष्यति ।
वीरणो नाम विख्यातः स वै वनरसाधिपः ॥२४॥
अर्जुनांशश्च मद्भक्तो जनिष्यति महामतिः ।
पुत्रः परिमलस्यैव ब्रह्मानन्द इति स्मृतः ॥२५॥
कान्यकुब्जे हि नकुलो भविष्यति महाबलः ।
रत्नभानुसुतो सौ वै लक्ष्मणो नाम विश्रुतः ॥२६॥
सहदेवस्तु बलवाञ्जनिष्यति महामतिः ॥
भीष्मसिंह सुतो जातो देवसिंह इति स्मृतः ॥२७॥
धृतराष्ट्रांश एवासौ जनिष्यत्यजमेरके ।
पृथिवीराज इति स द्रौपदी तत्सुता स्मृता ॥२८॥

वेला नाम्ना च विख्याता तारकः कर्ण एव हि ।
रक्तबीजस्तथा रुद्रो भविष्यति महीतले ॥२९॥
कौरवाश्च भविष्यन्ति महायुद्धविशारदाः ।
पांडुपक्षाश्च ते सर्वे धर्मिणो बलशालिनः ॥३०॥

सूत उवाच

इति श्रुत्वा हरिः प्राह विहस्य परमेश्वरम् ।
मया शक्त्यवतारेण रक्षणीया हि पांडवाः ॥३१॥
महावती पुरी रम्या मायादेवीविनिर्मिता ।
देशराजसुतस्तत्र ममांशो हि जनिष्यते ॥३२॥
देवकीजठरे जन्मोदयसिंह इति स्मृतः ।
आल्हादो मम धामांशो जनिष्यति गुरुर्मम ॥३३॥
हत्वाग्निवंशजान्भूपान्स्थापयिष्यामि वै कलिम् ।
इति श्रुत्वा शिवो देवस्तत्रैवांतरधीयत ॥३४॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये विक्रमाख्यानकाले प्रथमोऽध्यायः ॥१॥

---

# द्वितीयोऽध्यायः

## भरतखण्डस्थाष्टादशराज्यस्थानविभागादिवर्णनम्

सूत उवाच

प्रातः काले च संप्राप्ते पांडवाः पुत्रशोकिनः ।
प्रेतकार्याणि ते कृत्वा भीष्मान्तिकमुपाययुः ॥१॥
राजधर्मान्मोक्षधर्मान्दानधर्मान्विभागशः ।
श्रुत्वायजन्नश्वमेधैस्त्रिभिरुत्तमकर्मभिः ॥ २ ॥
षट्त्रिंशदब्दराज्यं हि कृत्वा स्वर्गपुरं ययुः ।
जनिष्यन्ते तदंशा वै कलिधर्म विवृद्धये ॥ ३ ॥

व्यास उवाच

इत्युक्त्वा स मुनिं सर्वान्पुनः सूतो वदिष्यति ।
गच्छध्वं मुनयः सर्वे योगनिद्रावशो ह्यहम् ।
चक्रतीर्थे समाधिस्थो ध्यायेऽहं त्रिगुणात्परम्॥ ४ ॥
इति श्रुत्वा तु मुनयो नैमिषारण्यवासिनः ।
योगसिद्धिं समास्थाय गमिष्यंत्यात्मनोन्तिके ॥ ५ ॥
द्वादशाब्दशते कालेऽतीते ते शौनकादयः ॥ ६ ॥
उत्थाय देवखाते च स्नानध्यादिकाः क्रियाः ।
कृत्वा सूतान्तिकं गत्वा वदिष्यंति पुनर्वचः ॥ ७ ॥

ऋषय ऊचुः

विक्रमाख्यानकालोऽयं द्वापरे च शिवाज्ञया ।
विनीतान्भगवन्भूमौ तदा तान्नृपतीन्वद ॥ ८ ॥

सूत उवाच

स्वर्गते विक्रमादित्ये राजानो बहुधाऽभवन् ।
तथाष्टादश राज्यानि तेषां नामानि मे शृणु ॥ ९ ॥
पश्चिमे सिंधुन द्यंते सेतुबन्धे हि दक्षिणे ।
उत्तरे बदरीस्थाने पूर्वे च कपिलान्तिके ॥१०॥
अष्टादशैव राष्ट्राणि तेषां मध्ये बभूविरे ।
इंद्रप्रस्थं च पांचालं कुरुक्षेत्रं च कापिलम् ॥११॥
अन्तर्वेदी व्रजश्चैवाजमेरं मरुधन्व च ।
गौर्जरं च महाराष्ट्रं द्राविडं च कलिंगकम् ॥ १२ ॥
आवंत्यं चोडुपं वंगं गौडं मागधमेव च ।
कौशल्यं च तथा ज्ञेयं तेषां राजा पृथक्पृथक् ॥१३॥
नानाभाषाः स्थितास्तत्र बहुधर्मप्रवर्तकाः ।
एवमब्दशतं जातं ततस्ते वै शकादयः ॥१४॥
श्रुत्वा धर्मविनाशं च बहुवृंदैः समन्विताः ।
केचित्तीर्त्वा सिंधुनदीमार्य्यदेशं समागताः ॥१५॥
हिमपर्वतमार्गेण सिंधुमार्गेण चागमन् ।
जित्वार्य्याॅंल्लुँठयित्वा तान्स्वदेशं पुनराययुः ॥१६॥
गृहीत्वा योषितस्तेषां परं हर्षमुपाययुः ।
एतस्मिन्नन्तरे तत्र शालिवाहनभूपतिः ॥१७॥
विक्रमादित्यपौत्रश्च पितृराज्यं गृहीतवान् ।
जित्वा शकान्दुराधर्षांश्चीनतैत्तिरिदेशजान् ॥१८॥
बाह्लीकान्कामरूपांश्च रोमजान्खुरजाञ्छठान् ।
तेषां कोशान्गृहीत्वा च दंडयोग्यानकारयत् ॥१९॥
स्थापिता तेन मर्यादा म्लेच्छार्याणां पृथक्पृथक् ।
सिंधुस्थानमिति ज्ञेयं राष्ट्रमार्य्यस्य चोत्तमम् ॥२०॥
म्लेच्छस्थानं परं सिन्धोः कृतं तेन महात्मना ।
एकदा तु शकाधीशो हिमतुंगं समाययौ ॥२१॥
हूणदेशस्य मध्ये वै गिरिस्थं पुरुषं शुभम् ।
ददर्श बलवान्राजा गौरांगं श्वेतवस्त्रकम् ॥२२॥
को भवानिति तं प्राह स होवाच मुदान्वितः ।

ईशपुत्रं च मां विद्धि कुमारीगर्भसंभवम् ॥२३॥
म्लेच्छधर्मस्य वक्तारं सत्यव्रतपरायणम् ।
इति श्रुत्वा नृपः प्राह धर्मः को भवतो मतः ॥२४॥
श्रुत्वोवाच महाराज प्राप्ते सत्यस्य संक्षये ।
निर्मर्यादे म्लेच्छदेशे मसीहोऽहं समागतः ॥२५॥
ईशामसी च दस्यूनां प्रादुर्भूता भयंकरी ।
तामहं म्लेच्छतः प्राप्य मसीहत्वमुपागतः ॥२६॥
म्लेच्छेषु स्थापितो धर्मो मया तच्छृणु भूपते ।
मानसं निर्मलं कृत्वा मलं देहे शुभाशुभम् ॥२७॥
नैगमं जपमास्थाय जपेत निर्मलं परम् ।
न्यायेन सत्यवचसा मनसैक्येन मानवः ॥२८॥
ध्यानेन पूजयेदीशं सूर्यमंडलसंस्थितम् ।
अचलोऽयं प्रभुः साक्षात्तथा सूर्योचलः सदा ॥२९॥
तत्त्वानां चलभूतानां कर्षणः स समंततः ।
इति कृत्येन भूपाल मसीहा विलयं गता ॥३०॥
ईशमूर्तिर्हृदि प्राप्ता नित्यशुद्धा शिवंकरी ।
ईशामसीह इति च मम नाम प्रतिष्ठितम् ॥३१॥
इति श्रुत्वा स भूपालो नत्वा तं म्लेच्छपूजकम् ।
स्थापयामास तं तत्र म्लेच्छस्थाने हि दारुणे ॥३२॥
स्वराज्यं प्राप्तवान्राजा हयमेधमचीकरत् ।
राज्यं कृत्वा स षष्टचब्दं स्वर्गलोकमुपाययौ ॥३३॥
स्वर्गते नृपतौ तस्मिन्यथा चासीत्तथा शृणु ॥३४॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये शालिवाहनकाले द्वितीयोऽध्यायः ॥२॥

## तृतीयोऽध्यायः

### शालिवाहनवंशीयनृपतिवर्णनम्

श्रीसूत उवाच

शालिवाहनवंशे च राजानो दश चाभवन् ।
राज्यं पंचशताब्दं च कृत्वा लोकान्तरं ययुः ॥ १ ॥
मर्य्यादा क्रमतो लीना जाता भूमंडले तदा ।
भूपतिर्दशमो यो वै भोजराज इति स्मृतः ।
दृष्ट्वा प्रक्षीणमर्य्यादां बली दिग्विजयं ययौ ॥ २ ॥
सेनया दशसाहस्र्या कालिदासेन संयुतः ।
तथान्यैर्ब्राह्मणैः सार्द्धं सिंधुपारमुपाययौ ॥ ३ ॥
जित्वा गांधारजान्म्लेच्छान्काश्मीरान्नारवाञ्छठान् ।
तेषां प्राप्य महाकोशं दंडयोग्यानकारयत् ॥ ४ ॥
एतस्मिन्नन्तरे म्लेच्छ आचार्य्येण समन्वितः ।
महामद इति ख्यातः शिष्यशाखासमन्वितः ॥ ५ ॥
नृपश्चैव महादेवं मरुस्थलनिवासिनम् ।
गंगाजलैश्च संस्नाप्य पंचगव्यसमन्वितैः ।
चंदनादिभिरभ्यर्च्य तुष्टाव मनसा हरम् ॥ ६ ॥

भोजराज उवाच

नमस्ते गिरिजानाथ मरुस्थलनिवासिने ।
त्रिपुरासुरनाशाय बहुमायाप्रवर्त्तिने ॥ ७ ॥
म्लेच्छैर्गुप्ताय शुद्धाय सच्चिदानन्दरूपिणे ।
त्वं मां हि किंकरं विद्धि शरणार्थमुपागतम् ॥ ८ ॥

सूत उवाच

इति श्रुत्वा स्तवं देवः शब्दमाह नृपाय तम् ।
गंतव्यं भोजराजेन महाकालेश्वरस्थले ॥ ९ ॥
म्लेच्छैस्सुदूषिता भूमिर्वाहीका नाम विश्रुता ।
आर्य्यधर्मो हि नैवात्र वाहीके देशदारुणे ॥१०॥
बभूवात्र महामायी योऽसौ दग्धो मया पुरा ।
त्रिपुरो बलिदैत्येन प्रेषितः पुनरागतः ॥११॥
अयोनिः स वरो मत्तः प्राप्तवान्दैत्यवर्द्धनः ।
महामद इति ख्यातः पैशाचकृतितत्परः ॥१२॥
नागन्तव्यं त्वया भूप पैशाचे देशधूर्तके ।
मत्प्रसादेन भूपाल तव शुद्धिः प्रजायते ॥१३॥
इति भूत्वा नृपश्चैव स्वदेशान्पुनरागमत् ।
महामदश्च तैः सार्द्धं सिंधुतीरमुपाययौ ॥१४॥
उवाच भूपतिं प्रेम्णा मायामदविशारदः ।
तव देवो महाराज मम दासत्वमागतः ॥१५॥
ममोच्छिष्टं सभुंजीयाद्यथा तत्पश्य भो नृप ।
इति श्रुत्वा तथा दृष्ट्वा परं विस्मयमागतः ॥१६॥
म्लेच्छधर्मे मतिश्चासीत्तस्य नृपस्य दारुणे ॥१७॥
तच्छ्रुत्वा कालिदासस्तु रुषा प्राह महामदम् ।
माया ते निर्मिता धूर्त नृपमोहनहेतवे ॥१८॥
हनिष्यामि दुराचारं वाहीकं पुरुषाधमम् ।
इत्युक्त्वा स द्विजः श्रीमान्नवार्णजपतत्परः ॥१९॥

जप्त्वा दशसहस्रं च तद्दशांशं जुहाव सः ।
भस्म भूत्वा स मायावी म्लेच्छदेवत्वमागतः ॥२०॥
भयभीतास्तु तच्छिष्या देशं वाहीकमाययुः ।
गृहीत्वा स्वगुरोर्भस्म मदहीनत्वमागतम् ॥२१॥
स्थापितं तैश्च भूमध्ये तत्रोषुर्मदतत्पराः ।
मदहीनं पुरं जातं तेषां तीर्थं समं स्मृतम् ॥२२॥
रात्रौ स देवरूपश्च बहुमायाविशारदः ।
पैशाचं देहमास्थाय भोजराजं हि सोऽब्रवीत् ॥२३॥
आर्य्यधर्मो हि ते राजन्सर्वधर्मोत्तमः स्मृतः ।
ईशाज्ञया करिष्यामि पैशाचं धर्मदारुणम् ॥२४॥
लिंगच्छेदी शिखाहीनः श्मश्रुधारी स दूषकः ।
उच्चालापी सर्वभक्षी भविष्यति जनो मम ॥२५॥
विना कौलं च पशवस्तेषां भक्ष्या मता मम ।
मुसलेनैव संस्कारः कुशैरिव भविष्यति ॥२६॥
तस्मान्मुसलवन्तो हि जातयो धर्मदूषकाः ।
इति पैशाचधर्मश्च भविष्यति मया कृतः ॥२७॥
इत्युक्त्वा प्रययौ देवः स राजा गेहमाययौ ।
त्रिवर्णे स्थापिता वाणी सांस्कृती स्वर्गदायिनी ॥२८॥
शूद्रेषु प्राकृती भाषा स्थापिता तेन धीमता ।
पंचाशदब्दकालं तु राज्यं कृत्वा दिवं गतः ॥२९॥
स्थापिता तेन मर्य्यादा सर्वदेवोपमानिनी ।
आर्य्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः ॥३०॥
आर्य्यवर्णाःस्थितास्तत्र विंध्यान्ते वर्णसंकराः ।
नरा मुसलवन्तश्च स्थापिताः सिंधुपारजाः ॥३१॥
बर्बरे तुषदेशे च द्वीपे नानाविधे तथा ।
ईशामसीहधर्म्माश्च सुरै राज्ञैव संस्थिताः ॥३२॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

### भोजराजवंश्यानेकभूपालराज्यवर्णनम्

सूत उवाच

स्वर्गते भोजराजे तु सप्तभूपास्तदन्वये ।
जाताश्चाल्पायुषो मन्दास्त्रिशताब्दान्तरे मृताः ॥ १ ॥
बहुभूपवती भूमिस्तेषां राज्ये बभूव ह ।
वीरसिंहश्च यो भूपः सप्तमः संप्रकीर्तितः ॥ २ ॥
तदन्वये त्रिभूपाश्च द्विशताब्दान्तरे मृताः ।
गंगासिंहश्च यो नृपो दशमः स प्रकीर्तितः ॥ ३ ॥
कल्पक्षेत्रे च राज्यं स्वं कृतवान्धर्मतो नृपः ।
अन्तर्वेद्यां कान्यकुब्जे जयचन्द्रो महीपतिः ॥ ४ ॥
इंद्रप्रस्थेनंगपालस्तोमरान्वयसंभवः ।
अन्ये च बहवो भूपा बभूवुर्ग्रामराष्ट्रपाः ॥ ५ ॥
अग्निवंशस्य विस्तारो बभूव बलवत्तरः ।
पूर्वे तु कपिलेस्थाने वाहीकान्ते तु पश्चिमे ॥ ६ ॥
उत्तरे चीनदेशान्ते सेतुबंधे तु दक्षिणे ।
षष्टिलक्षाश्च भूपाला ग्रामपा बलवत्तराः ॥ ७ ॥
अग्निहोत्रस्यकर्तारो गोब्राह्मणहितैषिणः ।
बभूवुर्द्वापरसमा धर्मकृत्यविशारदाः ॥ ८ ॥
द्वापराख्यसमः कालः सर्वत्र परिवर्तते ।
गेहेगेहे स्थितं द्रव्यं धर्मश्चैव जनेजने ॥ ९ ॥
ग्रामेग्रामे स्थितो देवो देशेदेशे स्थितो मखः ।
आर्यधर्मकरा म्लेच्छा बभूवुः सर्वतोमुखाः ॥१०॥
इति दृष्ट्वा कलिर्घोरो म्लेच्छया सह भीरुकः ।
नीलाद्रौ प्राप्य मतिमान्हरिं शरणमाययौ ॥११॥
द्वादशाब्दमिते काले ध्यानयोगपरोऽभवत् ।
ध्यानेन सच्चिदानंदं दृष्ट्वा कृष्णं सनातनम् ॥१२॥
तुष्टाव मनसा तत्र राधया सहितं हरिम् ।
पुराणमजरं नित्यं वृंदावननिवासिनम् ॥१३॥

कलिरुवाच

साष्टांगं दंडवत्स्वामिन्गृहाण ममचेश्वर ।
पाहि मां शरणं प्राप्तं चरणे ते कृपानिधे ॥१४॥
सर्वपापहरस्त्वं वै सर्वकालकरो हरिः ।
भवान्गौरः सत्ययुगे त्रेतायां रक्तरूपकः ॥१५॥
द्वापरे पीतरूपश्च कृष्णत्वं मम दिष्टके ।
मत्पुत्राश्च स्मृताम्लेच्छा आर्य्यधर्मत्वमागताः ॥१६॥
चतुर्गेहं च मे स्वामिन्द्यूतं मद्यं सुवर्णकम् ।
स्त्री हास्यं चाग्निवंश्यैश्च क्षत्रियैश्च विनाशितम् ॥१७॥
त्यक्तदेहस्त्यक्तकुलस्त्यक्तराष्ट्रो जनार्दन ।
त्वत्पादांबुजमाधाय स्थितोऽहं शरणं त्वयि ॥१८॥

इति श्रुत्वा स भगवान्कृष्णः प्राह विहस्य तम् ।
भो कले तव रक्षार्थं जनिष्येहं महावतीम् ॥१९॥
ममांशो भूमिमासाद्य क्षयिष्यति महाबलान् ।
म्लेच्छवंशस्य भूपालान्स्थापयिष्यति भूतले ॥२०॥
इत्युक्त्वा भगवान्साक्षात्तत्रैवान्तरधीयत ।
कलिस्तु म्लेच्छया सार्धं परमानंदमाप्तवान् ॥२१॥
एतस्मिन्नन्तरे विप्र यथा जातं शृणुष्व तत् ।
आभीरी वाक्सरे ग्रामे व्रतपा नाम विश्रुता ॥२२॥
नवदुर्गाव्रतं श्रेष्ठं नववर्षं चकार ह ।
प्रसन्ना चंडिका प्राह परं वरय शोभने ॥२३॥
साह तां यदि मे मातर्वरो देयस्त्वयेश्वरि ।
रामकृष्णसमौ बालौ भवेयातां ममान्वये ॥२४॥
तथेत्युक्त्वा तु सा देवी तत्रैवान्तरधीयत ।
वसुमान्नाम नृपतिस्तस्या रूपेण मोहितः ॥२५॥
उद्वाह्य धर्मतो भूपः स्वगेहे तामवासयत् ।
तस्यां जातौ नृपात्पुत्रौ देशराजस्तु तद्वरः ॥२६॥
आवार्यो वत्सराजश्च शतहस्तिसमो बले ।
जित्वा तौ मागधान्देशान्राज्यवंतौ बभूवतुः ॥२७॥
शतयत्तः स्मृतो म्लेच्छः शूरो वनरसाधिपः ।
तत्पुत्रो भीमसेनांशो वीरणोभूच्छिवाज्ञया ॥२८॥
तालवृक्षप्रमाणेन चोर्ध्ववेगो हि तस्य वै ।
तालनो नाम विख्यातः शतयत्तेन वै कृतः ॥२९॥
ताभ्यां नृपाभ्यां तद्युद्धमभवल्लोमहर्षणम् ।
युद्धेन हीनतां प्राप्तस्तालनो बलवत्तरः ॥३०॥
तदा मैत्री कृता ताभ्यां तालनेन समन्विता ।
जयचंद्रपरीक्षार्थे त्रयः शूराः समाययुः ॥३१॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये चतुर्थोऽध्यायः ॥४॥

## पञ्चमोऽध्यायः

### जयचन्द्रपृथ्वीराजयोरुत्पत्तिपूर्वकमार्यदेशसमद्विभागाधिपत्यवृत्तान्तवर्णनम्

सूत उवाच

इंद्रप्रस्थेऽनंगपालोनपत्यश्च महीपतिः ।
पुत्रार्थं कारयामास शैवं यज्ञं विधानतः ॥ १ ॥
कन्यके च तदा जाते शिवभागप्रसादतः ।
चंद्रकांतिश्च ज्येष्ठा वै द्वितीया कीर्तिमालिनी ॥ २ ॥
कान्यकुब्जाधिपायैव चंद्रकान्तिं पितादद्त् ।
देवपालाय शुद्धाय राष्ट्रपालान्वयाय च ॥ ३ ॥
सोमेश्वराय भूपाय चपहानिकुलाय तु ।
अजमेराधिपायैव तया वै कीर्तिमालिनीम् ॥ ४ ॥
जयशर्मा द्विजः कश्चित्समाधिस्थो हिमालये ।
दृष्ट्वा भूपोत्सवं रम्यं राज्यार्थे स्वमनोऽदधत ॥ ५ ॥
त्यक्त्वा देहं स शुद्धात्मा चंद्रकांत्याः सुतोभवत् ।
जयचंद्र इति ख्यातो बाहुशाली जितेन्द्रियः ।
रत्नभानुश्च संजज्ञे शूरस्तस्यानुजो बली ॥ ६ ॥
स जित्वा गौडवंगादीन्मरुदेशान्मदोत्कटान् ।
दंडचान्कृत्वा गृहं प्राप्य भ्रात्राज्ञातत्परोऽभवत ॥ ७ ॥
गंगासिंहस्य भगिनी नाम्ना वीरवती शुभा ।
रत्नभानोश्च महिषी बभूव वरवर्णिनी ॥ ८ ॥
नकुलांशस्तदा भूमौ तस्यां जातः शिवाज्ञया ।
लक्षणो नाम बलवान्खड्गयुद्धविशारदः ।
स सप्ताब्दान्तरे प्राप्ते पितुस्तुल्यो बभूव ह ॥ ९ ॥
त्रयश्च कीर्तिमालिन्यां पुत्रा जाता मदोत्कटाः ।
धुंधकारश्च प्रथमस्ततः कृष्णकुमारकः ।
पृथिवीराज एवासौ ततोनुज इति स्मृतः ॥१०॥
द्वादशाब्दवयः प्राप्तः सिंहखेलस्ततोऽभवत् ।
श्रुत्वाचानंगपालश्च तस्मै राज्यं स्वयं ददौ ।
गत्वा हिमगिरिं रम्यं योगध्यानपरोभवत् ॥११॥
मथुरायां धुंधकारोऽजमेरे च ततोनुजः ।
राजा बभूवनीतिज्ञस्तौ सुतौ पितुराज्ञया ॥१२॥
प्रद्योतश्चैव विद्योतः क्षत्रियौ चंद्रवंशजौ ।
मंत्रिणौ तस्य भूपस्य बलवंतौ मदोत्कटौ ॥१३॥
प्रद्योततनयो जातो नाम्ना परिमलो बली ।
लक्षसेनाधिपः सो हि तेन राज्ञैव संस्कृतः ॥१४॥
विद्योताद्भीष्मसिंहश्च गजसेनाधिपोऽभवत् ।
स्वर्गतेऽनंगपाले तु भूमिराजो महीपतिः ॥१५॥
दृष्ट्वा तान्विप्रियान्सर्वान्निजराज्यान्निराकरोत् ।
प्रद्योताद्याश्च चत्वारः स्वशूरैर्द्विशतैर्युताः ॥१६॥

कान्यकुब्जपुरं प्राप्य जयचंद्रमवर्णयन् ।
जयचंद्र महीपाल त्वन्मातृष्वसृजो नृपः ॥१७॥
मातामहस्य ते राज्यं प्राप्तवान्निर्भयो बली ।
न्यायेन कथितोऽस्माभिरर्द्धराज्यं हि ते स्मृतम् ॥१८॥
सर्वराज्यं कथं भुंक्षे श्रुत्वा तेन निराकृताः ।
भवन्तं शरणं प्राप्ता यथायोग्यं तथा कुरु ॥१९॥
इति श्रुत्वा महीपालो जयचंद्र उवाच तान् ।
अश्वसैन्ये मदीये चाधिकारी ते सुतो भवेत् ॥२०॥
नाम्ना परिमलः शूरस्त्वंमन्मंत्री भवाधुना ।
विद्योतश्च तथा मंत्री गजसैन्ये हि भीष्मकः ॥२१॥
वृत्त्यर्थे च मया वो वै पुरी दत्ता महावती ।
महीपतेश्च भूपस्य नगरी सा प्रियंकरी ॥२२॥
इति श्रुत्वा तु ते सर्वे तथा मत्वा मुमोदिरे ।
महीपतिस्तु बलवान्दुःखात्संत्यज्य तां पुरीम् ॥२३॥
कृत्वौर्वीयां पुरीमन्यां तत्र वासमकारयत् ।
अगमा मलना चैव भगिन्यौ तस्य चोत्तमे ॥२४॥
अगमा भूमिराजाय चान्या परिमलायसा ।
दत्ता भ्राता विधानेन परमानंदमापतुः ॥२५॥
विवाहांते च भूराजा दुर्गमन्यमकारयत् ।
कृत्वा च नगरीं रम्यां चतुर्वर्णनिवासिनीम् ॥२६॥
देहली सुमुहूर्तेन दुर्गद्वारे सुरोपिता ।
गता सा योजनान्ते वै वृद्धिरूपा सुकालतः ॥२७॥
विस्मितः स नृपो भूत्वा देहली नाम चाकरोत्।
देहलीग्राम इति च प्रसिद्धोऽभून्नृपाज्ञया ॥२८॥
त्रिवर्षांते च भो विप्रा जयचन्द्रो महीपतिः ।
लक्षषोडशसैन्याढ्यस्तत्र पत्रमचोदयत् ॥२९॥
किमर्थं पृथिवी राज मद्दायं मे न दत्तवान् ।
मातामहस्य वै दायं चार्द्धं मे च समर्पय ॥३०॥
नो चेन्मच्छस्त्रकठिनैः क्षयं यास्यंति सैनिकाः।
इति ज्ञात्वा महीराजो विंशल्लक्षाधिपो बली ॥३१॥
दूतं वै प्रेषयामास राजराजो मदोत्कटः ।
जयचंद्र महीपाल सावधानं शृणुष्व तत् ॥३२॥
यदा निरा कृता धूर्ता मया ते चंद्रवंशिनः ।
ततः प्रभृति सेनाङ्गं विंशल्लक्षं समाहृतम् ॥३३॥
त्वया षोडशलक्षं च युद्धसैन्यं समाहृतम् ।
सर्वे वै भारते भूपा दंडयोग्याश्च मे सदा ॥३४॥
भवान्न दंड्यो बलवान्करं मे दातुमर्हति ।
नो चेन्मत्कठिनैर्बाणैः क्षयं यास्यंति सैनिकाः॥३५॥
इति ज्ञात्वा तयोर्घोरं वैरं चासीन्महीतले ।
भूमिराजश्च बलवाञ्जयचन्द्रभयार्दितः ॥३६॥
जयचंद्रश्च बलवान्पृथिवीराजभीरुकः ।
जयचन्द्रश्चार्यदेशमर्द्धराष्ट्रमकल्पयत् ॥३७॥
पृथिवीराज एवासौ तदार्द्धं राष्ट्रमानयत् ।
एवं जातं तयोर्वैरमग्निवंशप्रणाशनम् ॥३८॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये पंचमोऽध्यायः ॥५॥

## षष्ठोऽध्यायः

### जयचन्द्रसुतायाः संयोगिन्याः स्वयंबरे पृथ्वीराजस्य प्रतिमायाः संयोगिन्यावर्णनम्

सूत उवाच

एकदा रत्नभानुर्हि महीराजेन पालिताम् ।
दिशं याम्यां स वै जित्वा तेषां कोशानुपाहरत्॥ १ ॥
महीराजस्तु तच्छ्रुत्वा परं विस्मयमागतः ।
रत्नभानोश्च तिलको बभूव बहुविस्तरः ॥ २ ॥
तिलका नाम विख्याता या तु वीरवती शुभा ।
श्रेष्ठा द्वादशराज्ञीनां जननी लक्षणस्य वै ॥ ३ ॥
जयचंद्रस्य भूपस्य योषितः षोडशाभवन् ।
तासां न तनयो ह्यासीत्पूर्वकर्मविपाकतः ॥ ४ ॥
गौडभूपस्य दुहिता नाम्ना दिव्यविभावरी ।
जयचंद्रस्य महिषी तद्दासी सुरभानवी ॥ ५ ॥
रूपयौवन संयुक्ता रतिकेलिविशारदा ।
दृष्ट्वा तां स नृपः कामी बुभुजे स्मरपीडितः ॥ ६ ॥
तस्यां जाता सुता देवी नाम्ना संयोगिनी शुभा।
द्वादशाब्दवयः प्राप्ता सा बभूव वरांगना ॥ ७ ॥
तस्याः स्वयंवरे राजाह्वयद्भूपान्महाशुभान् ।
भूमिराजस्तु बलवाञ्छ्रुत्वा तद्रूपमुत्तमम् ॥ ८ ॥
विवाहार्थे मनश्चासीच्चंद्रभट्टमचोदयत् ।
मंत्रिप्रवर भो मित्र चंद्रभट्ट मम प्रिय ॥ ९ ॥

कान्यकुब्जपुरीं प्राप्य मन्मूर्तिं स्वर्णनिर्मिताम्।
स्थापय त्वं सभामध्ये यद्वृत्तांतं तु मे वद ॥१०॥
इति श्रुत्वा चंद्रभट्टो भवानीभक्तितत्परः।
गत्वा तत्र भृगुश्रेष्ठ यथा प्रोक्तस्तथाकरोत् ॥११॥
स्वयंवरे च भूपाश्च नानादेश्याः समागताः।
त्यक्त्वा संयोगिनी तान्वै नृपमूर्तिविमोहिता ॥१२॥
पितरं प्राह कामाक्षी यस्य मूर्तिरियं नृप।
भविष्यति स मे भर्ता सर्वलक्षणलक्षितः ॥१३॥
जयचंद्रस्तु तच्छ्रुत्वा चंद्रभट्टमुवाच तम्।
यदि ते भूपतिश्चैव सर्वसैन्यसमन्वितः ॥१४॥
सञ्जयेद्योगिनीमेतां तर्हि मेऽतिप्रियो भवेत्।
चंद्रभट्टस्तु तच्छ्रुत्वा तत्तु सर्वमवर्णयत् ॥१५॥
पृथिवीराज एवासौ श्रुत्वा सैन्यमचोदयत्।
एकलक्षा गजास्तस्य सप्तलक्षास्तुरंगमाः ॥१६॥
रथाः पंचसहस्राश्च धनुर्बाणविशारदाः।
लक्षाः पदातयो ज्ञेया द्वादशैव महाबलाः ॥१७॥
राजानस्त्रिशतान्येव महीराजपदानुगाः।
सार्द्धं द्वाभ्यां च बन्धुभ्यां कान्यकुब्जे नृपोऽगमत् ॥१८॥
धुन्धुकारश्च तद्बन्धुर्गजानीकपतिस्सदा।
हयानीकपतिः कृष्ण कुमारो बलवत्तरः ॥१९॥
पदातीनां नृपतयः पतयस्तत्र चाभवन्।
महान्कोलाहलो जातः स्थलीं शून्यामकारयन् २०॥
विंशत्कोशप्रमाणेन स्थितं तस्य महाबलम्।
जयचंद्रस्तु संज्ञाय महीराजस्य चागमम् ॥२१॥
स्वसैन्यं कल्पयामास लक्षषोडशसंमितम्।
एकलक्षा गजा स्तस्य सप्तलक्षाः पदातयः ॥२२॥
वाजिनश्चाष्टलक्षाश्च सर्वयुद्धविशारदाः।
द्विशतान्येव राजानः प्राप्तास्तत्र समागमे ॥२३॥
आगस्कृतं महीराजं मत्वा ते शुक्लवंशिनः।
युद्धार्थिनः स्थितास्तत्र पुरमागस्कृतं ह्यभूतत् ॥२४॥
ईशनद्याः परे कूले तद्दोला स्थापिता तदा।
नाना वाद्यानि रम्याणि तत्र चक्रुर्महारवम् ॥२५॥
रत्नभानुर्गजानीके रूपानीके हि लक्षणः।
ताभ्यां सेनापतिभ्यां तौ संयुतौ बलवत्तरौ ॥२६॥
प्रद्योतश्चैव विद्योतो रत्नभानुं ररक्षतुः।
भीष्मः परिमलश्चैव लक्षणं चंद्रवंशजः ॥२७॥
भूपाः दातिसैन्ये च संस्थिता मदविह्वलाः।
ततोऽभ्रासीन्महद्युद्धं दारुणं सैन्यसंक्षयम् ॥२८॥
हया हयैर्मृता जाता गजाश्चैव गजैस्तथा।
पदातयः पदातैश्च मृताश्चान्ये क्रमाद्रणे ॥२९॥
भूपैश्च रक्षिताः सर्वे निर्भया रणमाययुः।
यावत्सूर्यः स्थितो व्योम्नि तावद्युद्धमवर्तत ॥३०॥
एवं पंचदिनं जातं युद्धं वीरजनक्षयम्।
गजा दशसहस्राणि हया लक्षाणि संक्षिताः ॥३१॥
पंचलक्षं महीभर्तुर्हतास्तत्र पदातयः।
राजानो द्वे शते तत्र रथाश्च त्रिशतं तथा ॥३२॥
कान्यकुब्जाधिपस्यैव गजा नवसहस्रकाः।
सहस्रैकं रथा ज्ञेयास्त्रिलक्षं च पदातयः ॥३३॥
एकलक्षं हयास्तत्र मृताः स्वर्गपुरं ययुः।
षष्ठाहे समनुप्राप्ते पृथिवीराज एव सः ॥३४॥
दुःखितो मनसा देवं रुद्रं तुष्टाव भक्तिमान्।
संतुष्टस्तु महादेवो मोहयामास तद्बलम् ॥३५॥
प्रसन्नस्तु महीराजो गतः संयोगिनीं प्रति।
दृष्ट्वा तत्सुन्दरं रूपं मुमोह वसुधाधिपः ॥३६॥
संयोगिनी नृपं दृष्ट्वा मूर्च्छिता चाभवत्क्षणात्।
एतस्मिन्नंतरे राजा तद्दोलामनयद्बलात् ॥३७॥
जगाम देहलीं भूपः सर्वसैन्यसमन्वितः।
योजनान्ते गते तस्मिन्बोधितास्ते मदोद्धटाः ॥३८॥
दृष्ट्वानैव तदा दोलां प्रजग्मुर्वेगवत्तराः।
श्रुत्वा कोलाहलं तेषां महीराजो नृपोत्तमः ॥३९॥
अर्द्धसैन्यं च संस्थाप्य स्वयं गेहमुपागमत्।
उभौ द्वभ्रातरौ वीरौ चार्द्धसैन्यसमन्वितौ ॥४०॥
सूकरक्षेत्रमासाद्य युद्धाय समुपस्थितौ।
एतस्मिन्नन्तरे सर्वे प्रद्योतादिमहाबलाः ॥४१॥
स्वसैन्यैः सह संप्राप्य महद्युद्धमकारयन्।
हया हयैश्च संजग्मुर्गजा अथ गजैः सह ॥४२॥
संकुलश्च महानासीद्दारुणो लोमहर्षणः।
दिनान्ते संक्षयं यातं तयोश्चैव महद्बलम् ॥४३॥
भयभीताः परे तत्र ज्ञात्वा रात्रिं तमोवृताम्।
प्रदुद्रुवुर्भयाद्वीरा हतशेषास्तु देहलीम् ॥४४॥
प्रद्योताद्याश्च ते वीरा देहलीं प्रति संययुः।
पुनस्तयोर्महद्युद्धं ह्यभवल्लोमहर्षणम् ॥४५॥

धुंधुकारश्च प्रद्योतं हृदि बाणैरताडयत् ।
त्रिभिश्च विषनिर्धूतैर्मूर्छितः स ममार च ॥४६॥
भ्रातरं निहतं दृष्ट्वा विद्योतश्च महाबलः ।
आजगाम गजारूढो धुंधुकारमताडयत् ॥४७॥
त्रिभिश्च तोमरैः सोऽपि मूर्छितो भूमि मागमत् ।
मूर्छितं भ्रातरं दृष्ट्वा धुंधुकारं महाबलम् ॥४८॥
तदा कृष्णकुमारोऽसौ गजस्थस्त्वरितो ययौ ।
रूपाविष्टश्च तं वीरं भल्लेनैवमताडयत् ॥४९॥
भल्लेन तेन संभिन्नो मृतः स्वर्गपुरं ययौ ।
विद्योते निहते तस्मिन्सर्वसैन्यचमूपतौ ॥५०॥
रत्नाभानुर्महावीरोऽयुध्यत्तेन समन्वितः ।
एतस्मिन्नंतरे राजा सहस्रगजसंयुतः ॥५१॥
लक्षणं सहितं ताभ्यां क्रुद्धं तं समयुध्यत ।
शिवदत्तवरो राजा भीष्मं परिमलं रुषा ॥५२॥
रुद्रास्त्रैर्मोहयामास लक्षणं बलवत्तरम् ।
मूर्छितांस्तान्समालोक्य रत्नभानुः शरैर्निजैः ॥५३॥
धुंधुकारं महीराजं वैष्णवैः सममोहयन् ।
कृष्णको रत्नभानुश्च युयुधाते परस्परम् ॥५४॥
उभौ समबलौ वीरौ गजपृष्ठस्थितौ रणे ।
अन्योन्यनिहतौ नागौ खड्गहस्तौ महीतले ॥५५॥
युयुधाते बहून्मार्गान्कृतवंतौ सुदुर्जयौ ।
प्रहरान्तं रणं कृत्वा मरणायोपजग्मतुः ॥५६॥
हते तस्मिन्महावीर्ये कान्यकुब्जा भयातुराः ।
मूर्छितांस्त्रीन्समादाय पंचलक्षबलैर्युताः ॥५७॥
रणं त्यक्त्वा गृहं जग्मुर्नृपशोकपरायणाः ।
रत्नभानौ च निहते हतोत्साहाश्च भूमिपाः ॥५८॥
स्वंस्वं निवेशनं जग्मुर्महीराजभयातुराः ।
देवानाराधयामासुर्यभेष्टं ते गृहे गृहे ॥५९॥
महीराजस्तु बलवान्सप्तलक्षबलान्वितः ।
धुंधुकारेण सहितो बंधुकृत्योर्ध्वमाचरत् ॥६०॥
तथा भीष्मः परिमलो लक्षणः पितरं स्वकम् ।
गंगाकूले समागम्य चोर्ध्वदैहिकमाचरन् ॥६१॥
भूमिराजस्य विजयो जयचंद्रयशो रणे ।
प्रसिद्धमभवद्भूमौ गेहेगेहे जनेजने ॥६२॥
जयचंद्रः कान्यकुब्जे देहल्यां पृथिवीपतिः ।
उत्सवं कारयित्वा तु परमानन्दमाययौ ॥६३॥

इति श्रीभविष्ये महापुराणे चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### भीष्मराजस्य तपसा संतुष्टेनेंद्रेण तस्मैवडवादानवर्णनम्

सूत उवाच

भीष्मः सिंहस्थिते गंगाकूले शक्रप्रपूजकः ।
शक्रं सूर्यमयं ज्ञात्वा तपसा समतोषयत् ॥ १ ॥
मासांते भगवानिंद्रो ज्ञात्वा तद्भक्तिमुत्तमाम ।
वरं वरय च प्राह श्रुत्वा शूरोऽब्रवीदिदम ॥ २ ॥
देहि मे वडवां दिव्यां यदि तुष्टो भवान्प्रभुः ।
इति श्रुत्वा तदा तस्मै वडवां हरिणीं शुभाम् ॥ ३ ॥
ददौ स भगवानिंद्रस्तत्रैवान्तर्हितोभवत् ॥ ४ ॥
तस्मिन्काले परिमलः पितृशोकपरायणः ।
पार्थिवैः पूजयामास महादेवमुमापतिम ।
परीक्षार्थे शिवः साक्षात्सर्परोगेण तं ग्रसत् ॥ ५ ॥
व्यतीते पंचमे मासे नृपः शक्तिविवर्जितः ।
न तत्याज महापूजां महाक्लेशसमन्वितः ॥ ६ ॥
मरणाय ययौ काशीं स्वपत्न्या सहितो नृपः ।
उवास वटमूलांते रात्रौ रोगप्रपीडितः ॥ ७ ॥
एतस्मिन्नन्तरे कश्चित्पन्नगो मूलसंस्थितः ।
शब्दं चकार मधुरं श्रुत्वा रुद्राहिराययौ ॥ ८ ॥
रुद्राहिं पन्नगः प्राह भवान्निर्दय मन्दधीः ।
शिवभक्तं नृपमिमं पीडयेत्प्रत्यहं खलः ॥ ९ ॥
मूर्खोऽयं भूपतिः साक्षादारनालं पिबेन्नहि ।
इति श्रुत्वा स रुद्राहिराह रे पन्नगाधम ॥१०॥
राज्ञो देहे परं हर्षं प्रत्यहं प्राप्तवाहनम् ।
स्वगेहं दुःखतस्त्याज्यं कथं त्याज्यं मया शठ ॥११॥
मूर्खोत्र भूपतिर्यो वै तैलोष्णं यत्र दत्तवान् ।
इत्युक्त्वान्तर्गतो देहे श्रुत्वा सा मलना सती ॥१२॥

---

*१ अडभाव आर्षः ।

चकार पन्नगोक्तं तद्गतरोगो नृपोऽभवत् ।
तैलोष्णैर्बिलमापूर्य चखान च सती स्वयम् ॥१३॥

ततो जातं स्वयं लिंगमंगुष्ठाभं सनातनम् ।
ज्योतीरूपं चिदानंदं सर्वलक्ष्मसमन्वितम् ॥१४॥

निशीथे तम उद्भूते दिक्षु सूर्यत्वमागतम् ।
दृष्ट्वा स विस्मितो राजा पूजयामास शंकरम् ॥१५॥

महिम्नस्तवपाठैश्च तुष्टाव गिरिजापतिम् ।
तदा प्रसन्नो भगवान्वरं ब्रूहि तमब्रवीत् ॥१६॥

श्रुवाह नृपतिर्देवं यदि तुष्टो महेश्वर ।
श्रीपतिर्मे गृहं प्राप्य वसेन्मत्प्रियकारकः ॥१७॥

तथेत्युक्त्वा महादेवो लिंगरूपत्वमागतः ।
प्रत्यहं भारमेकं च सुवर्णं सुषुवे तनोः ॥१८॥

तदा मलस्तु संतुष्टः प्राप्तो गेहं महावतीम् ।
भीष्मसिंहेन सहितः परमानंदमाययौ ॥१९॥

ततःप्रभृति वर्षांते जयचंद्रपुरीं ययौ ।
दृष्ट्वा परिमलं राजा कृतकृत्यत्वमागतः ॥२०॥

दिष्ट्या ते संक्षितो रोगो दिष्ट्या ते दर्शितं सुखम् ।
भवान्निजपुरीं प्राप्य सुखी भवतु मा चिरम् ॥२१॥

यदा मे विघ्न आभूयात्तदा त्वं मां समाचर ।
इति श्रुत्वा परिमलो गत्वा स्थानमवासयत् ॥२२॥

तदा तु लक्षणो वीरो भगवन्तमुषापतिम् ।
जगन्नाथमुपागम्य समभ्यर्च्चापरोऽभवत् ॥२३॥

पक्षमात्रांतरे विष्णुर्जगन्नाथ उषापतिः ।
वरं ब्रूहि वचश्चेति लक्षणं प्राह हर्षतः ॥२४॥

इत्युक्तः स तु तं देवं नत्वोवाच विनम्रधीः ।
देहि मे वाहनं दिव्यं सर्वशत्रुविनाशनम ॥२५॥

इति श्रुत्वा जगन्नाथः शक्तिमैरावताद्गजात ।
समुत्पाद्य ददौ तस्मै दिव्यामैरावतीं मुदा ॥२६॥

आरुह्यैरावतीं राजा लक्षणो गेहमाययौ ।
स वै परिमलो राजा जगाम च महावतीम् ॥२७॥

एतस्मिन्नंतरे वीरास्तालनाद्या मदोत्कटाः ।
महावतीं पुरीं प्राप्य ददृशुस्तं महीपतिम् ॥२८॥

तेन सार्द्धं च महतीं प्रीतिं कृत्वा न्यवासयन् ।
मासान्ते च पुनस्ते वै राजानो विनयान्विताः ॥२९॥

ऊचुस्तं शृणु भूपाल वयं गच्छामहे पुरीः ।
तदा राजापि तान्प्राह सर्वान्क्षितिपतीनथ ॥
दत्त्वाधिकारं पुत्रेभ्यस्तदाऽऽयास्यामि वोऽन्तिकम् ॥३०॥

तथेत्युक्तास्तु ते राज्ञा स्वगेहे पुनराययुः ।
सानुजो देशराजस्तु द्विजेभ्यः स्वपुरं ददौ ॥३१॥

पुत्रेभ्यस्तालनो वीरो ददौ वाराणसीं पुरीम् ।
अलिकोल्लामतिः कालः पत्रः पुष्पोदरी वरी ॥३२॥

करीनरी सुललितस्तेषां नामानि वै क्रमात् ।
द्वौ द्वौ पुत्रौ स्मृतौ तेषां पितुस्तुल्यपराक्रमौ ॥३३॥

स वै पुत्राज्ञया शूरस्तालनो राक्षसप्रियः ।
यातुधानमयं देवं तुष्टाव म्लेच्छपूजनैः ॥३४॥

तथा वसुमतः पुत्रौ भूपती देशवत्सजौ ।
शक्रं सूर्य्यं समाराध्य कृतकृत्यौ बभूवतुः ॥३५॥

सिंहिनीं नाम वडवां या तु दत्ता भयानका ।
आरुह्य बलवाञ्छूरो गमनाय मनो दधौ ॥३६॥

पंचशब्दं महानागमिन्द्रदत्तं मनोरमम् ।
देशराजस्तमारुह्य गमनाय मनो दधे ॥३७॥

हयं पपीहकं नाम सूर्यदत्तं नरस्वरम् ।
वत्सराजस्तमारुह्य गमनाय मनो दधे ॥३८॥

त्रय शूराः समागम्य नगरीं ते महावतीम् ।
ऊषुस्तत्र महात्मानो बहुमानेन सत्कृताः ॥३९॥

सेनाषष्टिसहस्रं तत्तेषां स्वामी स तालनः ।
मंत्रिणौ भ्रातरौ तौ च नृपतेश्चन्द्रवंशिनः ॥४०॥

तैर्वीरै रक्षितो राजा कृतकृत्यत्वमागतः ॥४१॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः

## सहदेवांशावतारकथाप्रसंगेन जम्बुकराजादिराजमण्डलवृत्तान्तवर्णनम्

सूत उवाच

जम्बुको नाम भूपालो महीराजो भयातुरः ।
कालियेन युतः प्राप्तो नर्मदायास्तटे शुभे ॥ १ ॥
पार्थिवैः पूजयामास देवदेवं पिनाकिनम् ।
षण्मासान्ते महादेवो जम्बुकं प्राह भूपतिम् ॥ २ ॥
वरं वरय तेऽभीष्टं भूप आह कृतांजलिः ।
अजितत्वं नृपैः सर्वैर्देहि मे करुणानिधे ॥ ३ ॥
तथेत्युक्त्वा महादेवस्तत्रैवान्तर्हितोऽभवत् ।
कालियस्तत्सुतो लब्ध्वा वीरो माहेश्वरं वरम् ॥ ४ ॥
मोहनं सर्वसैन्यानां पितुरंतिकमाययौ ।
पितरं प्राह नम्रात्मा देह्याज्ञां तात मत्प्रियाम् ॥ ५ ॥
गमिष्यामि बलैःसार्द्धं गंगां शुद्धजलां शुभाम् ।
तथेत्युक्त्वा पिता तस्मै ययौ तु स्वं निवेशनम् ॥ ६ ॥
भगिनीं प्राह बलवान्विजयैषिणि शोभने ।
किमिच्छसि शुभं वस्तु तदाज्ञां देहि मा चिरम् ॥ ७ ॥
साह ग्रैवेयकं हारं मणिमुक्ताविभूषितम् ।
मत्प्रियं देहि मे वीर तथेत्युक्त्वा ययौ गृहात् ॥ ८ ॥
कालियो लक्षतुरगैः संयुतस्त्वरितोऽगमत् ।
प्राप्य गंगां सागरगां कृत्वा स्नानं विधानतः ॥ ९ ॥
दत्त्वा दानानि विप्रेभ्यो जयचन्द्रपुरीं ययौ ।
निर्धनः समभूद्राजा बाहुशाली महाबलः ॥१०॥
कान्यकुब्जे महाहारो न प्राप्तो बहुमूल्यकः ।
तदोर्वीयाधिपेनैव महीशेन प्रबोधितः ॥११॥
ययौ महावतीं रम्यां शिवदत्तवरो बली ।
रुरोध नगरीं सर्वां श्रुत्वा राजा भयातुरः ॥१२॥
रुद्रं कपर्दिनं शंभुं शरण्यं शरणं ययौ ।
शिवाज्ञया नृपो धीमान्बलैः षष्टिसहस्रकैः ॥१३॥
सार्द्धं पुराद्बहिर्यातस्त्रिभिः शूरैः सुरक्षितः ।
तस्य नागाः सहस्रं च देशराजश्च तत्पतिः ॥१४॥
हयाः षोडशसाहस्रा वत्सराजस्तु तत्पतिः ।
शेषाः पदातयस्तस्य तालनेनैव रक्षिताः ॥१५॥
अभवत्तु मुलं युद्धं तेषां वीरवरक्षयम् ।
अहोरात्रप्रमाणेन महद्घोरमवर्तत ॥१६॥
ते हत्वा शात्रवीं सेनां चक्रुर्जयरवान्मुहुः ।
भयार्ता नार्मदेयाश्च माहिष्मतिनिवासिनः ॥१७॥
दुद्रुवुः सर्वतो विप्र दृष्ट्वा तान्कालियो नृपः ।
आश्वास्य प्रययौ युद्धमर्द्धसैन्यसमन्वितः ॥१८॥
हृदि कृत्वा महादेवं मोहनं बाणमादधत् ।
सिद्धमन्त्रप्रभावेण मोहितास्ते बभूविरे ॥१९॥
शेषास्ते शत्रवः सर्वे रिपुघाताय संययुः ।
अलसां स्तान्कपालेषु जघ्नुस्ते भयवर्जिताः ॥२०॥
भीष्मसिंहस्तथा दृष्ट्वा बोधयामास सैनिकान् ।
सूर्यदत्तेन बाणेन संज्ञाख्यानेन तत्र वै ॥२१॥
भैरवाख्येन भल्लेन शत्रुदेहमताडयत् ।
मूर्च्छितः सोऽपतद्वीरो गजपृष्ठे शरार्दितः ॥२२॥
तदा माहिष्मती सेना निर्ययौ सा दिशोदश ।
मुहूर्तं कश्मलं प्राप्य पुनरुत्थाय कालियः ॥२३॥
भल्लेन तच्छिरः कायादपाहरत भूमिपः ।
हते तस्मिन्महावीर्ये तालनाद्या महाबलाः ॥२४॥
कालियं ते पराजित्य तं शत्रुं प्रत्यषेधयन् ।
महाकष्टान्वितो भूपो ध्यात्वा मनसि शंकरम् ॥२५॥
मोहयित्वा रिपून्सर्वान्स ययौ स्वं निवेशनम् ।
अर्द्धसैन्येन सहिता हतशेषास्त्रयस्तथा ॥२६॥
तदा परिमलो राजा दृष्ट्वा शत्रुपराजयम् ।
परिष्वज्य महावीरान्स्वगेहं पुनराययौ ॥२७॥
जयचन्द्रस्तु तच्छ्रुत्वा परं विस्मयमागतः ।
तालनं च समाहूय सेनाधीशमकारयत् ॥२८॥
भीष्मसिंहे गते लोके पंचमासान्तर नृपे ।
तत्पत्नी जनयामास पुत्ररत्नं शुभाननम् ॥२९॥
सा तु गुर्जरभूपस्य तनयाख्या मदालसा ।
दिव्यं पुत्रं समालोक्य मुमुदे सगणा भृशम् ॥३०॥
श्रुत्वा तज्जन्म नृपतिर्विततार धनं बहु ।
आहूय गणकान्प्राज्ञाञ्जातकर्म ह्यकारयत् ॥३१॥
सहदेवांश एवासौ भुवि जातः शिवाज्ञया ।
देवसिंहः कृतो नाम गणकैः शास्त्रचिंतकैः ॥३२॥

१ द्वीपोद्भवस्य आर्षः ।

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चयेऽष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः

## देशराजवत्सराजविवाहवृत्तान्तवर्णनम्

सूत उवाच

कालियं तौ पराजित्य भ्रातरौ नृपसेवकौ ।
गतौ गोपालके राष्ट्रे भूपतिर्दलवाहनः ॥ १ ॥
सहस्रचंडिकाहोमे नानाभूपसमागमे ।
गृहीतौ महिषौ ताभ्यां भूपैरन्यैश्च दुर्जयौ ॥ २ ॥
पूर्वं हि नृपकन्याभ्यां प्रत्यहं बंधनं गतौ ।
तौ संपूज्य विधानेन ददौ ताभ्यां च कन्यके ॥ ३ ॥
देवकीं देशराजाय ब्राह्मीं तस्यानुजाय वै ।
ददौ दुर्गाज्ञया राजा रूपयौवनशालिनीम् ॥ ४ ॥
लक्षावृत्तिं तथा वेश्यां गीतनृत्यविशारदाम् ।
कन्ययोश्च सखीं रम्यां मेघमल्लाररागिणीम् ॥ ५ ॥
शतं गजान्रथान्पंच हयांश्चैवसहस्रकान् ।
चत्वारिंशच्चशिबिकाः प्रददौ दलवाहनः ॥ ६ ॥
बहुद्रव्ययुतां कन्यां दासदासीसमन्विताम् ।
उदूह्य वेदविधिना प्रापतुश्च महावतीम् ॥ ७ ॥
मलना तां वधूं दृष्ट्वा तस्यै ग्रैवेयकं ददौ ।
ब्राह्म्यै षोडशशृंगारं तथा द्वादशभूषणम् ॥ ८ ॥
राजा च परमानन्दी देशराजायशूरिणे ।
ददौ दशपुरं रम्यं नानाजननिषेवितम् ॥ ९ ॥
ऊषतुस्तत्र तौ वीरौ राजमान्यौ महाबली ।
एतस्मिन्नन्तरे जातो देवसिंहो हराज्ञया ॥१०॥
जाते तस्मिन्कुमारे तु देवकी गर्भमादधौ ।
दासश्रुता पतेर्देवी सुषुवे पुत्रमूर्जितम् ॥११॥
गौरांगं कमलाक्षं च दीप्यमानं स्वतेजसा ।
तदानंदमयो देवः शक्रः सुरगणैः सह ॥१२॥
शंखशब्दं चकारोच्चैर्जयशब्दं पुनः पुनः ।
दिशः प्रफुल्लिताश्चसन्ग्रहाः सर्वे तथा दिवि ॥१३॥
आयाता बहवो विप्रा वेदशास्त्रपरायणाः ।
चक्रुस्ते जातकर्मास्य नामकर्म तथाविधम् ॥१४॥
रामांशं तं शिशुं ज्ञात्वा प्रसन्नवदनं शुभम् ।
भाद्रकृष्णतिथौ षष्ठ्यां चन्द्रवारेऽरुणोदये ॥१५॥
संजातः कृत्तिकाभे च पितृवंशयशस्करः ।
आह्लादनाम्ना ह्यभवत्प्रश्रितश्च महीतले ॥१६॥

मासान्ते च सुते जाते ब्राह्मी पुत्रमजीजनत् ।
धर्मजांशं तथा गौरं महाबाहुं सुवक्षसम् ॥१७॥
तदा च ब्राह्मणाः सर्वे दृष्ट्वा बालं शुभाननम् ।
प्रसन्नवदनं चारुं पद्मचिह्नपदस्थितम् ॥१८॥
तैर्द्विजैश्च कृतो नाम्ना बलखानिर्महाबलः ।
वर्षान्ते वत्सजे जाते मूलगंडान्तसंभवः ॥१९॥
चामुण्डो देवकिसुतो निजवंशभयंकरः ।
जनितारं ततस्त्याज्य इत्यूचुर्द्विजसत्तमाः ।
न तत्याज सुतं राजा बालत्वेऽपि दयापरः ॥२०॥
त्रिवर्षे गते तस्मिन्बलखानौ सुते शुभे ।
शूद्र्यां जातः शिखण्डचंशो रूपणो नाम विश्रुतः॥२१॥
वत्सराजो ययौ देशे गुर्जरे च मदालसाम् ।
स सुतां च स मादाय दिने तस्मिन्समागतः ॥२२॥
प्राप्ते तस्मिन्वत्सराजे जम्बुकः स्वबलैर्वृतः ।
सप्तलक्षैश्च संप्राप्तो बाहुशाली यतेंद्रियः ॥२३॥
रुरोध नगरीं सर्वां राज्ञः परिमलस्य वै ।
त्रिलक्षैश्च माहावत्यै सार्द्धं तौ जग्मतुः पुरात् ॥२४॥
माहिष्मतैः सप्तलक्षैः सार्द्धं युद्धमभून्महत् ।
त्रिरात्रं दारुणं घोरं यमराष्ट्रविवर्द्धनम् ॥२५॥
शिवस्य वरदानेन भ्रात्रोर्जातः पराजयः ।
बद्ध्वा तौ जम्बुको राजा लुंठयित्वा महावतीम् ॥२६॥
वेश्यां लक्षारतिं तस्य तं हतं तद्गजं तथा ।
ग्रैवेयकं तथा हारं मणिरत्नविभूषितम् ॥२७॥
गृहीत्वा नगरीं सर्वां भस्मयित्वा गृहं ययौ ।
ये गुप्ता भूतले शूरास्ते शेषाश्च तदाऽभवन् ॥२८॥
दुर्गेषु यानि रत्नानि तानि प्राप्य मुदा ययौ ।
लुंठिते नगरे तस्मिन्देवकी गर्भमुत्तमम् ॥२९॥
कृष्णांशं सप्तमास्यं हि चादधाद्दैवतप्रिया ।
ज्ञात्वा कुलाधर्मं पुत्रं चामुंडं देवकी सती ॥३०॥
कल्पक्षेत्रे समागम्य कालिंद्यां तमपातयत् ।
योजनान्ते गते तस्मिन्महीराजपुरोहितः ॥३१॥
सामन्तो नाम तं गृह्य श्वशुरालयमाययौ ।
जातस्तु दशमासान्ते रात्रौ घोरतमोवृते ॥३२॥

१ देवतानि प्रियाणि यस्या इति बहुव्रीहौ 'वा प्रियस्य' इति प्रियशब्दस्य परनिपातः ।

भाद्रकृष्णाष्टमीसौम्ये ब्राह्मनक्षत्रसंयुते ।
प्रादुरासीज्जगन्नाथो देवक्यां च महोत्तमः ॥३३॥
श्यामांगः स च पद्माक्ष इंद्रनीलमणिद्युतिः ।
विमानानां सहस्राणां प्रकाशः समजायत ॥३४॥
विस्मिता जननी तत्र दृष्ट्वा बालं तमद्भुतम् ।
नगरे च महाश्चर्यं जातं सर्वे समाययुः ॥३५॥
उदयः किमहो जातो देवानां सूर्यरूपकः ।
इत्याश्चर्य्यजुजां तेषां वाग्बभूवाशरीरिणी ॥३६॥
कृष्णांशो भूतले जातः सर्वानन्दप्रदायकः ।
स नाम्नोदयसिंहो हि सर्वशत्रुप्रकाशहा ॥३७॥
इत्याकाशवचः श्रुत्वा ते परं हर्षमाययुः ।
यस्मिन्काले सुतो जातस्तदा च मलना सती ॥३८॥
श्यामांगं सुन्दरं बालं सर्वलक्षणलक्षितम् ।
सुषुवे परमोदारं फाल्गुनांशंशिवाज्ञया ॥३९॥
तदा तु नगरी सर्वा हर्षभूता बभूव ह ।
षष्ठाहनि सुते जाते ब्रह्मानन्दगुणाकरे ॥४०॥
ब्राह्मी तु सुषुवे पुत्रं पार्षदांशं महाबलम् ।
श्यामांगं कमलाक्षं च दृढस्कन्धं महाभुजम् ॥४१॥
ब्राह्मणाश्च तदागत्य जातकर्म ह्यकारयन् ।
सुखखानिर्द्विजैर्नाम्ना कृतस्तु गणकोत्तमैः ॥४२॥
क्रमेण वर्द्धिता बालाः सर्वलोकशिवंकराः ।
तेषां काली महच्छ्रेष्ठा पितृमातृप्रियंकरी ॥४३॥
तृतीयाब्दे वयः प्राप्ते कृष्णांशेबलवत्तरे ।
शक्रस्तद्दर्शनकांक्षी हयारूढो जगाम ह ॥४४॥
क्रीडन्स चन्दनारण्ये कृष्णांशो भ्रातृभिः सह ।
नभस्थं पुरुषं दृष्ट्वा सहस्राक्षं जहास वै ॥४५॥
अश्विनी हरिणी दिव्या उच्चैःश्रवसमन्तिके ।
गत्वा गर्भमुपादाय स्वगेहं पुनराययौ ॥४६॥
वर्षांतरे च सुषुवे कपोतं तनयं शुभम् ।
पञ्चाब्दे च समायाते विद्याध्ययनमास्थिताः ॥४७॥
ब्राह्मणं शिवशर्माणं सर्वविद्याविशारदम् ।
स्वभक्त्या सेवनं कृत्वा ते चक्रुर्वेदपाठिकाम् ॥४८॥
अष्टाब्दे चैव कृष्णांशो नामपत्रादिकां क्रियाम् ।
लिखतां बालकानां च कृष्णांशः श्रेष्ठतामगात् ॥४९॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखंडापरपर्याये कलियुगीयेतिहाससमुच्चये कृष्णांशावतारो नामनवमोऽध्यायः ॥९॥

---

## दशमोऽध्यायः

### कृष्णांशचरित्रवर्णनम् राजकरदीकरणवृत्तान्तवर्णनम्

सूत उवाच

नवमाब्दे वयः प्राप्ते कृष्णांशो बलवत्तरः ।
पठित्वान्वीक्षिकीं विद्यां चतुःषष्टिकलास्तथा ॥ १ ॥
धर्मशास्त्रं तथैवापि सर्वश्रेष्ठो बभूव ह ।
तस्मिन्काले भृगुश्रेष्ठ महीराजो नृपोत्तमः ॥ २ ॥
करार्थं प्रेषयामास स्वसैन्यं च महावतीम् ।
ते वै लक्षं महाशूराः सर्वशस्त्रास्त्र धारिणः ॥ ३ ॥
ऊचुः परिमलं भूपं शृणु चंद्रकुलोद्भव ।
सर्वे च भारते वर्षे ये राजानो महाबलाः ॥ ४ ॥
षडंशं करमादायास्मद्राजाय ददंति वै ।
भवान्करे हि तस्यैव योग्यो भवति सांप्रतम् ॥ ५ ॥
अद्यप्रभृति चेद्राज्ञे तस्मै दद्यात्करं न हि ।
महीराजस्य रौद्रास्त्रैः क्षयं यास्यति सैनिकैः ॥ ६ ॥
ये भूपा जयचंद्रस्य पक्षगास्ते हि तद्भयात् ।
ददंते भूमिराजाय दंडं तन्मानसत्कृताः ॥ ७ ॥
इति श्रुत्वा स नृपतिस्तस्मै राज्ञे महात्मने ।
करं षडंशमादाय ददौ प्रीतिसमन्वितः ॥ ८ ॥
दशलक्षमितं द्रव्यं गृहीत्वा ते समाययुः ।
महीराजः प्रसन्नात्मा पूर्ववैरमपाहरत् ॥ ९ ॥
तदा ते लक्षशूराश्च कान्यकुब्जमुपाययुः ।
जयचंद्रं तु नत्वोचुः शृणु लक्षणकोविद ॥१०॥
पृथ्वीराजो महाराजो दंडं त्वत्तः समिच्छति ।
इत्युक्तस्तैर्वैष्णवास्त्री लक्षणास्तानुवाच ह ॥११॥
मद्देशे मंडलिकाश्च बहवः संति सांप्रतम् ।
भूमिराजो मांडलिको मयि जीवति मा भवेत् ॥१२॥
इत्युक्त्वा वैष्णवास्त्रं तान्क्रुद्धः स च समादधत् ।
तदस्त्रज्वालतः सर्वे भयभीताः प्रदुद्रुवुः ॥१३॥
महीराजस्तु तच्छ्रुत्वा महद्भयमुपागमत् ।
दशाब्दे च वयः प्राप्ते कृष्णांशे मल्लकोविदे ॥१४॥

नानामल्लाः समाजग्मुस्तेन राज्ञैव सत्कृताः ।
तेषां मध्ये स कृष्णांशो बाहुशाली बभूव ह ॥१५॥
उर्वीयाधिपतेः पुत्रः षोडशाब्दवया बली ।
शतमल्लैश्च सहितः कदाचित्स समागतः ॥१६॥
पितृष्वसृपतिं भूपं नत्वा नाम्नाऽभयो बली ।
उवाच शृणु भूपाल कृष्णोऽयं मदमत्तरः ॥१७॥
तेन सार्द्धं भवेन्मल्लयुद्धं मम नृपोत्तम ।
इति वज्रसमं वाक्यं श्रुत्वा राजा भयातुरः ॥१८॥
उवाच श्यालजं प्रेम्णा भवान्युद्धविशारदः ।
अष्टाब्दोऽयं सुतः स्निग्धो मम प्राणसमो भुवि१९॥
क भवान्वज्रसदृशः क्व सुतोऽयं सुकोमलः ।
अन्यैर्मल्लैर्मदीयैश्च सार्द्धं योग्यो भवान्रणे ॥२०॥
इति श्रुत्वा नृपः श्यालो महीपतिरिति स्मृतः ।
स तमाह रुषाविष्टो बालोऽयं बलवत्तरः ॥२१॥
शृणु तत्कारणं भूप यथा ज्ञातो मया शिशुः ।
आगस्कृतं महीराजं मत्वा सतिलकः सुतम् ॥२२॥
पंडितांश्च समाहूय मुहूर्तं पृष्टवान्मुदा ।
गणेशो नाम मतिमान्ज्योतिश्शास्त्रविशारदः ॥२३॥
लक्षणं वचनं प्राह महीराजमनुत्तमम् ।
शिवदत्तवरो राजन्कुबेर इव सांप्रतम् ॥२४॥
कृष्णांशस्तस्य योग्योऽयं देशराजसुतोऽवरः ।
नान्योऽस्ति भूतले राजन्सत्यं सत्यं ब्रवीम्यहम् २५॥
तच्छ्रुत्वा लक्षणो वीरः पूर्वे बर्हिष्मतीं प्रति ।
कल्पक्षेत्रं दक्षिणे च भूमिग्रामं तु पश्चिमे ॥२६॥
उत्तरे नैमिषारण्यं स्वकीयं राष्ट्रमादधत् ।
अतः श्रेष्ठः कुमारोऽयं कान्यकुब्जे मया श्रुतः॥२७॥
नागोत्सवे च भूपाल पंचम्यां च नभस्सिते ।
दृश्यमात्रं कुमारांगं तस्माद्योग्यो ह्ययं सुतः ॥२८॥
इति श्रुत्वा स कृष्णांशो वाक्छरेण प्रपीडितः ।
अभयं भुजयोः शीघ्रं गृहीत्वा सोऽयुधद्बली ॥२९॥
क्षणमात्रं रणं कृत्वा भूमिमध्ये तमक्षिपत् ।
अभयस्य भुजो भग्नस्तत्र जातो बलेन वै ॥३०॥
मूर्च्छितं स्वसुतं ज्ञात्वा खड्गहस्तो महीपतिः ।
प्रेषयामास तान्मल्लान्कृष्णांशस्य प्रहारणे ॥३१॥
रुषाविष्टांश्च ताञ्ज्ञात्वा कृष्णांशो बलवत्तरः ।
तानेकैकं समाक्षिप्य विजयी स बभूव ह ॥३२॥
पराजिते मल्लबले खड्गहस्तो महीपतिः ।
मरणाय मतिं चक्रे कृष्णांशस्य प्रभावतः ॥३३॥
ज्ञात्वा तमीदृशं भूपं वारयामास भूपतिः ।
अभयं नीरुजं कृत्वा प्रेम्णा गेहमवासयत् ॥३४॥
नवाब्दांगे च कृष्णांशे चाह्लादाद्याः कुमारकाः ।
मृगयार्थे दधुश्चित्तं तमूचुर्भूपतिं प्रियम् ॥३५॥
नमस्ते तात भूपाग्र्य सर्वानंदप्रदायक ।
अस्मभ्यं त्वं हयान्देहि मत्प्रियान्करुणाकर ॥३६॥
इति श्रुत्वा वचस्तेषां तथेत्युक्त्वा महीपतिः ।
भूतले वासिनोऽश्वान्वै दिव्यान्त्राट् चतुरो वरान्३७॥
ददौ तेभ्यो मुदा युक्तो हरिणीगर्भसंभवान् ।

ऋषय ऊचुः

त्वन्मुखेन श्रुतं सूत हरिणी वडवा यथा ॥३८॥
भीष्मसिंहाय संप्राप्ता शक्रादेवेशतो मुने ।
इदानीं श्रोतुमिच्छामः कुतो जातास्तुरंगमाः ॥३९॥
दिव्यांगा भूषणापन्ना नभस्सलिलगामिनः ।

सूत उवाच

देशराजेन भूपेन पुरा धर्मयुतेन वै ॥४०॥
सेवनं भास्करस्यैव कृतं च द्वादशाब्दिकम् ।
सेवान्ते भगवान्सूर्यो वरं ब्रूहि तमब्रवीत् ॥४१॥
प्राह देव नमस्तुभ्यं यदि देयो वरस्त्वया ।
हयं दिव्यमयं देहि नभस्थलजलातिगम् ॥४२॥
तथेत्युक्त्वा रविः साक्षाद्ददौ तस्मै पपिहकम् ।
लोकान्पाति पपीर्ज्ञेयस्तस्येदं नाम चोत्तमम् ॥४३॥
अतः पपीहको नाम लोकपालनकर्मवान् ।
स हयो मदमत्तश्च हरिणीं दिव्यरूपिणीम् ॥४४॥
बुभुजे स्मरवेगेन तस्यां जातास्तुरंगमाः ।
मनोरथश्च पीतांगः करालः कृष्णरूपकः ॥४५॥
एकगर्भे समुद्भूतौ शैब्यसुग्रीवकांशकौ ।
यस्मिन्दिने समुद्भूतौ जिष्णुविष्णुकलांशतः ॥४६॥
तदा जातौ हरिण्याश्च मेघपुष्पबलाहकौ ।
बिन्दुलश्च सुवर्णांगः श्वेतांगो हरि नागरः ॥४७॥
दिव्यांगास्ते हि चत्वारः पूर्वं जाता महाबलाः ।
पश्चादंशावताराश्च जातास्तेषां महात्मनाम् ॥४८॥
इति ते कथितं विप्र शृणु तत्र कथां शुभाम् ।
भूतले ते हयाः सर्वे प्राप्ताश्चोपरिभूमिगाः ॥४९॥
देवसिंहाय बलिने ददौ चाश्वं मनोरथम् ।
आह्लादाय करालं च कृष्णांशायैव बिन्दुलम्॥५०॥
ब्रह्मानंदाय पुत्राय प्रददौ हरिनागरम् ।
ते चत्वारो हयारूढा मृगयार्थं वनं ययुः ॥५१॥

हरिणीं वडवां शुभ्रां बलखानिः समारुहत् ।
तदनु प्रययौ वीरो वनं सिंहनिषेवितम् ॥५२॥
आह्लादेनैव शार्दूलो हतः प्राणिभयंकरः ।
देवसिंहेन सिंहश्च सूकरो बल खानिना ॥५३॥
ब्रह्मानंदेन हरिणो हतस्तत्र महावने ।
मृगाः शतं हतास्तैश्च तान्गृहीत्वा गृहं ययुः ॥५४॥
एतस्मिन्नंतरे देवी शारदा च शुभानना ।
मृगी स्वर्णमयी भूत्वा तेषामग्रे प्रधाविता ॥५५॥
दृष्ट्वा तां मोहिताः सर्वे स्वैः स्वैर्बाणैरताडयन् ।
शरास्तु संक्षयं जग्मुर्मृग्यंगे बलवत्तराः ॥५६॥
आह्लादाद्याश्च ते शूरा विस्मिताश्च बभूविरे ।
तस्मिन्काले स कृष्णांगो बाणेनैव ह्यताडयत् ॥५७॥
तदा च पीडिता देवी भयभीता ययौ वनम् ।
कृष्णांशः क्रोधताम्राक्षस्ततपश्चात्प्रययौ बली ॥५८॥
वनांतरं च संप्राप्य देवी धृत्वा स्वकं वपुः ।
तमुवाच प्रसन्नाक्षी परीक्षा ते मया कृता ॥५९॥
यदा ते च भयं भूयात्तदा त्वं मां सदा स्मर ।
साधयिष्यामि ते कार्यं कृष्णांशो हि भवान्विभुः ॥६०॥
इत्युक्त्वान्तर्हिता देवी शारदा सर्वमंगला ।
कृष्णांशस्तु ययौ गेहं तैश्च सार्द्धं मुदा युतः ॥६१॥
तदा पराक्रमं तेषां दृष्ट्वा राजा सुखोऽभवत् ।
गृहे गृहे च सर्वेषां लक्ष्मीर्देवी समाविशत् ॥६२॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

### कृष्णांशकृतमहीराजपराजयादिवृत्तान्तवर्णनम्

सूत उवाच

दशाब्दे च वयः प्राप्ते विष्णोः शक्त्यवतारके ।
वसंतसमये रम्ये ययुस्ते प्रमदावनम् ॥ १ ॥
ऊषुस्तत्र व्रताचारे माधवे कृष्णवल्लभे ।
स्नात्वा च सागरे प्रातः पूजयामासुरंबिकाम् ॥ २ ॥
ऋतुकालोद्भवैः पुष्पैर्धूपैर्दीपैर्विधानतः ।
जप्त्वा सप्तशतीस्तोत्रं दध्युः सर्वकरीं शिवाम् ॥ ३ ॥
कंदमूलफलाहारा जीवहिंसाविवर्जिताः ।
तेषां भक्तिं समालोक्य मासांते जगदंबिका ॥ ४ ॥
ददौ तेभ्यो वरं रम्यं तच्छृणुध्वं समाहिताः ।
आह्लादाय सुरत्वं च बलत्वं बलखानये ॥ ५ ॥
कालज्ञत्वं च देवाय ब्रह्मज्ञत्वं नृपाय च ।
कृष्णांशायैव योगत्वं दत्त्वा चांतर्दधे शिवा ॥ ६ ॥
कृताकृत्यास्तदा ते वै स्वगेहं पुनराययुः ।
तेषां प्राप्ते वरे रम्ये मलना पुत्रमूर्जितम् ॥ ७ ॥
श्यामांगं सात्यकेरंशं सुषुवे शुभलक्षणम् ।
स ज्ञेयो रणजिच्छूरो राजन्यप्रियकारकः ॥ ८ ॥
आषाढे मासि संप्राप्ते कृष्णांशो हयवाहनः ।
उर्वीयां नगरीं प्राप्त एकाकी निर्भयो बली ॥ ९ ॥
दृष्ट्वा स नगरीं रम्यां चतुर्वर्णनिषेविताम् ।
द्विजशालां ययौ शूरो द्विजधेनुप्रपूजकः ॥१०॥
दत्त्वा स्वर्णं द्विजातिभ्यः संतर्प्य द्विजदेवताः ।
महीपतिगृहं रम्यं जगाम बलवत्तरः ॥११॥
नत्वा स मातुलं धीमांस्तथान्याँश्च सभासदः ॥१२॥
तदा नृपाज्ञया शूरा बंधनाय समुद्यताः ।
खड्गहस्ताः समाजग्मुर्यथा सिंहं गजाः शशाः ॥१३॥
मोहितं तं नृपं कृत्वा दुष्टबुद्धिर्महीपतिः ।
कृत्वा लोहमयं जालं तस्योपरि समादधे ॥१४॥
एतस्मिन्नंतरे वीरो बोधितो देवमायया ।
आगस्कृतान्त्रिपूञ्ज्ञात्वा खड्गहस्तःसमावधीत ॥१५॥
हत्वा पंचशतं शूरो हयारूढो महाबली ।
उर्वीयां नगरीं प्राप्य जलपाने मनो दधौ ॥१६॥
कूपे दृष्ट्वा शुभा नार्यो घटपूर्तिकरीस्तदा ।
उवाच मधुरो वाक्यं देहि सुंदरि मे जलम् ॥१७॥
दृष्ट्वा ताः सुंदरं रूपं मोहनायोपचक्रिरे ।
भित्त्वा तासां तु वै कुम्भान्पाययित्वा हयं जलम् ॥१८॥
वनं गत्वा रिपुं जित्वा बद्ध्वा तमुभयं बली ।
चण्डिकापार्श्वमागम्य तद्वधाय मनोदधे ॥१९॥
श्रुत्वा स करुणं वाक्यं त्यक्त्वा स्वनगरं ययौ ।
नृपांतिकमुपागम्य वर्णयामास कारणम् ॥२०॥
श्रुत्वा परिमलो राजा द्विजातिभ्यो ददौ धनम् ।
समाघ्राय स कृष्णांशं कृतकृत्योऽभवन्नृपः ॥२१॥

संप्राप्तैकादशाब्दे तु कृष्णांशे युद्धदुर्मदे ।
महीपतिर्निरुत्साहः प्रययौ देहलीं प्रति ॥२२॥
बलिं यथोचितं दत्त्वा भगिन्यै भयकातरः ।
रुरोद बहुधा दुःखं देशराजात्मजप्रजम् ॥२३॥
अगमा भगिनी तस्य दृष्ट्वा भ्रातरमातुरम् ।
स्वपतिं वर्णयामास श्रुत्वा राजाब्रवीदिदम् ॥२४॥
अद्याहं स्वबलैः सार्द्धं गत्वा तत्र महावतीम् ।
हनिष्यामि महादुष्टं देशराजसुतं रिपुम् ॥२५॥
इत्युक्त्वा धुंधुकारं च समाहूय महाबलम् ।
सैन्यमाज्ञापयामास सप्तलक्षं तनुत्यजम् ॥२६॥
केचिच्छूरा हयारूढा उष्ट्रारूढा महाबलाः ।
गजारूढा रथारूढाः संयुश्च पदातयः ॥२७॥
देवसिंहस्तु कालज्ञः श्रुत्वा चागमनं रिपोः ।
नृपपार्श्वे समागम्य सर्वं राज्ञे न्यवेदयत् ॥२८॥
श्रुत्वा परिमलो राजा विह्वलोऽभूद्भयातुरः ।
बलखानिस्तसमुत्थाय हर्षयुक्त इवाह च ॥२९॥
अद्याहं च महीराजं धुंधुकारं ससैन्यकम् ।
जित्वा दंड्यं च भवतः करिष्यामि तवाज्ञया ॥३०॥
इत्युक्त्वा तं नमस्कृत्य सेनापतिरभून्मुने ।
तदा तु विर्भया वीरा दृष्ट्वा राजानमातुरम् ॥३१॥
चतुर्लक्षबलैः सार्द्धं ते युद्धाय समाययुः ।
शिंशपाख्यं वनं घोरं छेददित्वा रिपोस्तदा ॥३२॥
ऊषुस्तत्र रणे मत्ताः सर्वशत्रुभयंकरा ।
एतस्मिन्नन्तरे तत्र धुंधुकारादयो बलाः ॥३३॥
कृत्वा कोलाहलं शब्दं युद्धाय समुपाययुः ।
पूर्वाह्णे तु भृगुश्रेष्ठ सन्नद्धास्ते शतघ्निपाः ॥३४॥
शतघ्नीभिस्त्रिसाहस्रैः पञ्चसाहस्रका ययुः ।
द्विसहस्रशतघ्नीभिः सहिता श्चन्द्रवंशिनः ॥३५॥
सैन्यं षष्टिसहस्रं च स्वर्गलोकमुपाययौ ।
तदर्द्धं च तथा सैन्यं महीराजस्य संक्षिप्तम् ॥३६॥
दुद्रुवुर्भीरुकाः शूरा बलखानेर्दिशो दश ।
रथा रथै रणे हन्युर्गजाश्चैव गजैस्तथा ॥३७॥
हया हयैस्तथा उष्ट्रा उष्ट्रैश्च समाहनन् ।
एवं सुतुमुले जाते दारुणे रोमहर्षणे ॥३८॥
हाहाभूतान्स्वकीयांश्च सैन्यान्दृष्ट्वा महाबलान् ।
अपराह्णे भृगुश्रेष्ठ पंच शूराः समाययुः ॥३९॥

ब्रह्मानंदः शरैः शत्रूननयद्यमसादनम् ।
देवसिंहस्तया भल्लैराह्लादस्तत्र तोमरैः ॥४०॥
बलखानिः स्वखड्गेन कृष्णांशस्तु तथैव च ।
द्विलक्षान्क्षत्रियाञ्जघ्नुः सर्वसैन्यैः समंततः ॥४१॥
दृष्ट्वा पराजितं सैन्यं धुंधुकारो महाबलः ।
आह्लादं च स्वभल्लेन गजारूढः समावधीत् ॥४२॥
आह्लादे मूर्च्छिते तत्र देवसिंहो महाबलः ।
भल्लेन भ्रातरं तस्य दंशयामास वेगतः ॥४३॥
स तीक्ष्णव्रणमासाद्य गजस्थः संमुमोह वै ।
आगाताः शतराजानो नानादेश्या महाबलाः ॥४४॥
शस्त्राण्यस्त्राणि तेषां तु छित्त्वा खड्गेन वत्सजः ।
स्वखड्गेन शिरांस्येषां पातयामास भूतले ॥४५॥
हते शत्रुसमूहे तु तच्छेषास्तु प्रदुद्रुवुः ।
महीराजस्तु बलवान्दृष्ट्वा भग्नं स्वसैन्यकम् ॥४६॥
आजगाम गजारूढः शिवदत्तवरो बली ।
रौद्रेणास्त्रेण हृदये चावधीद्वत्सजं रिपुम् ॥४७॥
आह्लादं च तथा वीरं देवं परिमलात्मजम् ।
मूर्च्छयित्वा महावीरान्छत्रुसैन्यमुपागमत् ॥४७॥
पूजयित्वा शतघ्नीश्च महावधमकारयत् ।
रोपणस्त्वरितो गत्वा राज्ञे सर्वमवर्णयत् ॥४९॥
एतस्मिन्नंतरे वीरः सुखखानिर्महाबलः ।
कपोतं हयमारुह्य नभोमार्गेण चागमत् ॥५०॥
मूर्च्छयित्वा महीराजं स्वबंधूंश्च सवाहनान् ।
कृत्वा नृपांतमागम्य बंधनाय समुद्यतः ॥५१॥
तदोत्थाय महीराजो महादेवेन बोधितः ।
पुनस्तान्स्वशरै रौद्रैर्मूर्च्छयामास कोपवान् ॥५२॥
सुखखान्यादिकाच्छूरान्संबध्य निगडैर्दृढैः ।
नृपं परिमलं प्राप्य पुन र्युद्धमचीकरत् ॥५३॥
हाहाभूतं स्वसैन्यं च दृष्ट्वा स उदयो हरिः ।
नभोमार्गे हयं कृत्वा ताः शतघ्नीरनाशयत् ॥५४॥
महीराजगजं प्राप्य बद्ध्वा तं निगडैर्बली ।
आह्लादपार्श्वमागम्य भ्रात्रे भूपं समर्पयत् ॥५५॥
तदा तु पृथिवीराजो लज्जितस्तेन निर्जितः ।
पञ्चकोटिधनं दत्त्वा स्वगेहं पुनरायत्यौ ॥५६॥
देवसिंहाज्ञया शूरो बलखानिर्द्धि वत्सजः ।
तैर्द्रव्यैर्नगरीं रम्यां कारयामास सुन्दरीम् ॥५७॥

१ वञ्चित इत्यर्थः ।

शिरीषाख्यं पुरं नाम तेन वीरेण वै कृतम् ।
सर्ववर्णसमायुक्तं द्विक्रोशायामसंमितम् ॥५८॥
तत्रैव न्यवसद्वीरो वत्सजः स्वकुलैः सह ।
त्रिंशत्क्रोशे कृतं राष्ट्रं तत्रैव बलखानिना ॥५९॥
श्रुत्वा परिमलो राजा तत्रागत्य मुदान्वितः ।
आघ्राय वत्सजं शूरं देवराजसुतं तथा ॥६०॥
ब्रह्मानंदेन सहितः स्वगेहं पुनरागयौ ॥६१॥

इति श्रीभविष्ये महापुराणे प्रतिसर्गपर्वणि चतुर्युगखण्डापरपर्याये कलियुगीयेतिहाससमुच्चये एकादशोऽध्यायः ॥ ११ ॥

---

# द्वादशोऽध्यायः

## कृष्णांशसमीपे राजमण्डलागमनम्

सूत उवाच
द्वादशाब्दे हि कृष्णांशे यथाजातं तथा शृणु ।
इषशुक्लदशम्यां च राज्ञां जातः समागमः ॥ १ ॥
कान्यकुब्जे महारम्ये नानाभूपाः समाययुः ।
श्रुत्वा पराजयं राज्ञो महीराजस्य लक्षणः ॥ २ ॥
कृष्णांशदर्शने वांछा तस्य चासीत्तदा मुने ।
पितृव्यं भूपतिं प्राह द्रष्टुं यास्यामि तं शुभम् ॥ ३ ॥
जितो येन महीराजः सर्वलोकप्रपूजितः ।
इति श्रुत्वा वचस्तस्य जयचंद्रो महीपतिः ।
भ्रातृजं प्रणतं प्राह शृणु शुक्लयशस्कर ॥ ४ ॥
राजराजपदं ते हि कथं संहर्तुमिच्छसि ।
इत्युक्त्वा जयचंद्रस्तु तदाज्ञां नैव दत्तवान् ॥ ५ ॥
राजानस्ते च सहिताः स्वसैन्यैः परिवारिताः ।
कृष्णांशं द्रष्टुमिच्छन्तः संययुश्च महीपतिम् ॥ ६ ॥
शिरीषाख्यपुरस्थं च ज्ञात्वा कृष्णांशमुत्तमम् ।
महीपतिं पुरस्कृत्य समाजग्मुर्नृपास्तदा ॥ ७ ॥
ददृशुस्तं महात्मानं पुंडरीकनिभाननम् ।
प्रसन्नवदनाः सर्वे प्रशशंसुः समंततः ॥ ८ ॥
तदा महीपतिः क्रुद्धो वचनं प्राह भूपतीन् ।
यस्येयं च कृता श्लाघा युष्माभिर्दूरवासिभिः ।
पितरौ तस्य बलिनौ माहिष्मत्यां मृतिं गतौ ॥ ९ ॥
जम्बुको नाम भूपालो नार्मदीयैः समन्वितः ।
बद्ध्वा तौ प्रययौ गेहं लुंठयित्वा धनं बहु ।
शिलापत्रे समारोप्य तयोर्गात्रमचूर्णयत् ।
शिरसी च तयोश्छित्त्वा वटवृक्षे समारुहत् ॥१०॥
अद्यापि तौ स्थितौ वीरौ हा पुत्रेति प्रभाषिणौ ।
प्रेतदेहे च पितरौ यस्य प्राप्तौ महाबलौ ।
तस्योदयो वृथा ज्ञेयो वृथाकीर्तिः प्रियंकरी ॥११॥
इति श्रुत्वा स कृष्णांशो भूपतीन्प्राह नम्रधीः ।
गतौ मत्पितरौ सार्द्धं गुर्जरे यत्र वै रणः ॥१२॥
म्लेच्छैर्नराशनैः सार्द्धं तन्नृपेण रणोऽभवत् ।
देशराजो वत्सराजो युद्धं कृत्वा भयंकरम् ।
म्लेच्छैस्तैश्च हतौ तत्र श्रुतेयं विश्रुता कथा ॥१३॥
मातुलेनाद्य कथितं नवीनं मरणं तयोः ।
चेत्सत्यं वचनं तस्य पौरुषं मम पश्यत ॥१४॥
इत्युक्त्वा तान्स कृष्णांशो मातरं प्राह सत्वरम् ।
हेतुं च वर्णयामास भाषितं च महीपतेः ॥१५॥
श्रुत्वा वज्रसमं वाक्यं रुरोद जननी तदा ।
नोत्तरं प्रददौ माता पति दुःखेन दुःखिता ॥१६॥
ज्ञात्वा पितृवधं श्रुत्वा जम्बुकं शिवकिंकरम् ।
मनसा स च कृष्णांशस्तुष्टाव परमेश्वरीम् ॥१७॥
जय जय जय जगदम्ब भवानि ह्यखिललोक-
सुरपितृमुनिखानि ।
त्वया ततं सचराचरमेव विश्वं पातमिदं हृतमेव ॥१८॥
इति ध्यात्वा स कृष्णांशः सुष्वाप निजसद्मनि ।
तदा भगवती तुष्टा तालनं बलवत्तरम् ।
मोहयित्वाशु तत्पार्श्वे प्रेषयामास सर्वगा ॥१९॥
चतुर्लक्षबलैः सार्द्धं तालनः शीघ्रमागतः ।
स्वसैन्यं चोदयामास चैकलक्षं महाबलम् ॥२०॥
बलखानिस्तदा प्राप्तश्चैकलक्षबलान्वितः ।
अनुजं तत्र संस्थाप्य शिरीषाख्ये महाबलः ॥२१॥
सज्जीभूतान्समालोक्य तानुद्याने ससैन्यकान् ।
भीतः परिमलो राजा कृष्णांशं प्रति चाययौ ॥२२॥
विह्वलं नृपमालोक्य कृष्णांशोऽऽश्वासयन्मुदा ॥२३॥
लक्षसैन्यं तदीयं च गृहीत्वा चाधिपोऽभवत् ।
शतघ्न्यः पंचसाहस्रा नानावर्णाः सुवाहनाः ॥२४॥

पताकाः पञ्चसाहस्राः साहस्त्रं काष्ठकारिणः ।
गजा दशसहस्राश्च रथाः पंचसहस्रकाः ॥२५॥
त्रिलक्षाश्च हयाः सव उष्ट्रा दशसहस्रकाः ।
शेषाः पदातयो ज्ञेयास्तस्मिन्सैन्ये भयानके ॥२६॥
तालनश्च समायातः सर्वसेनाधिपोऽभवत् ।
देवसिंहो रथानां च सर्वेषामीश्वरोऽभवत् ॥२७॥
बलखानिर्हयानां च सर्वेषामधिपोऽभवत् ।
आह्लादश्च गजानां च सर्वेषामधिपोऽभवत ।
पत्तीनां चैव सर्वेषां कृष्णांशश्चाधिपोऽभवत ॥२८॥
नत्वा ते मलनां भूपो दत्वा दानान्यनेकशः ।
समाययुश्च ते सर्वे दक्षिणाशां बलान्विताः ॥२९॥
पक्षमात्रगतः कालो मार्गे तस्मिन्नणैषिणाम् ।
छित्वा तत्र वनं घोरं नानाकंटकसंयुतम् ।
सेनां निवासयामासुर्निर्भयास्ते महाबलाः ॥३०॥
देवसिंहमतेनैव योगिनस्ते तदाभवन् ।
नर्तकश्चैव कृष्णांशश्चाह्लादो डमरुप्रियः ॥३१॥
मड्डुधारी तदा देवो वीणाधारी च तालनः ।
वत्सजः कांस्यधारी च बलखानिर्महाबलः ॥३२॥
मातुरग्रे स्थिता स्ते वै ननृतुः प्रेमविह्वलाः ।
मोहिता देवकी चासीन्न ज्ञातं तत्र कारणम् ॥३३॥
मोहितां मातरं दृष्ट्वा परं हर्षमुपाययुः ।
तदा तां कथयामासुर्वयं ते तनया हि भोः ॥३४॥
नत्वा तां प्रययुः सर्वे पुरीं माहिष्मतीं शुभाम् ।
नगरं मोहयामासुर्वाद्यगानविशारदाः ॥३५॥
दूत्या सार्द्धं रिपोर्गेहं ययुस्ते कार्यतत्पराः ।
नृत्यगानसुवाद्यैश्च राज्ञस्ते मोहने रताः ॥३६॥
विसंज्ञां महिषीं कृत्वा कृष्णांशः सर्वमोहनः ।
प्राप्तवांस्तत्र यत्रासौ तत्सुता विजयैषिणी ॥३७॥
दृष्ट्वा सा सुंदरं रूपं श्यामांगं पुरुषोत्तमम् ।
मुमोह वशमापन्ना मैथुनार्थं समुद्यता ॥३८॥
दृष्ट्वा तथा गतां नारीं कृष्णांशःश्लक्ष्णया गिरा ।
शत्रोर्भेदं च पप्रच्छ कामिनीं मदविह्वलाम् ॥३९॥
साह भो देवकीपुत्र यदि पाणिं ग्रहीष्यसि ।
तर्हि ते कथयिष्यामि पितृर्भेदं हि दारुणम् ॥४०॥
तथेत्युक्त्वा स बलवाँस्तस्याःपाणिं गृहीतवान् ।
ज्ञात्वा भेदं रिपोः सर्वं तामाश्वास्य ययौ मुदा ॥४१॥

एतस्मिन्नन्तरे राज्ञी बाधिता प्राह योगिनम् ।
देशराजप्रियाहारं नवलक्षस्य मूल्यकम् ।
तुभ्यं दास्यामि संतुष्टा नृत्यगानविमोहिता ॥४२॥
इति श्रुत्वा वत्ससुतस्तां प्रशस्य गृहीतवान् ।
प्रययौ बंधुभिः सार्द्धं जम्बुको यत्र तिष्ठति ॥४३॥
ननर्त तत्र कृष्णांशो बलखानिरगायत ।
आह्लादस्तालनो देवो दध्मुर्वाद्यगतीर्मुदा ॥४४॥
मोहितोऽभून्नृपस्तत्र कालियः स्वजनैः सह ।
कामं वरय कृष्णांग यच्च ते हृदये स्थितम् ॥४५॥
इति श्रुत्वा वचः शत्रोर्बलखानिर्महाबलः ।
तमाह भो महीपाल लक्षावर्तिर्वरांगना ।
स्वविद्यां दर्शयेन्मह्यं तदा तृप्तिं व्रजाम्यहम् ॥४६॥
इति श्रुत्वा तथा मत्वा लक्षावर्तिं नृपोत्तमः ।
सभायां नर्तयामास देशराजप्रियां तथा ॥४७॥
सा वेश्या सुतमाह्लादं ज्ञात्वा योगित्वमागतम् ।
रुरोद तत्र दुःखार्ता नेत्रादश्रूणि मुंचती ॥४८॥
रुदितां तां समालोक्य रुदन्नाह्लाद एव सः ।
स्वभुजौ ताडयामास तत्प्रियार्थे महाबलः ॥४९॥
कृष्णांशस्तत्र तं हारं तस्याः कंठे प्रदत्तवान् ।
उवाच क्रोधताम्राक्षस्तामाश्वास्य पुनः पुनः ॥५०॥
अहं चोदयसिंहोऽयं पितुर्वैरार्थमागतः ।
हनिष्यामि रिपुं भूपं सात्मजं सबलं तथा ॥५१॥
इति श्रुत्वा वचस्तस्य कालियो बलवत्तरः ।
पितुराज्ञां पुरस्कृत्य शतव्यूहसमन्वितः ॥५२॥
तेषां च बंधनायैव कपाटं समरुद्ध सः ।
ताञ्छत्रून्समनुज्ञाय पाशहस्तान्सशस्त्रगान् ॥५३॥
स्वंस्वं खड्गं समाकृष्य क्षत्रियास्ते समाघ्नत ।
शतशूरे हते तैश्च कालियो भयकातरः ॥५४॥
त्यक्त्वा तातं प्रदुद्राव ते तु गेहाद्बहिर्ययुः ।
स्वसैन्यं शीघ्रमासाद्य युद्धाय समुपस्थितः ।
शिबिराणि कृतान्येव नर्मदाकूलमास्थितैः ॥५५॥
कृत्वा तु नर्मदासेतुं नल्वमात्रं सुपुष्टिदम् ।
स्वसैन्यं तारयामास चतुरंगसमन्वितम् ॥५६॥
रुरोध नगरीं सर्वां बलखानिर्बलैर्युतः ।
शतघ्नीरग्रतः कृत्वा महाशब्दकरीस्तदा ।
माहिष्मत्याश्च हर्म्याणि पातयामास भूतले ॥५७॥

